प्रकाशकः—सत्यानन्द-वेदवागीशः,
२७२, आर्यनगर, अलवर ( ३०१००१ )

संस्करणम्—प्रथमम्
संवत् २०४३ वि., १९८७ ई०

मूल्यम्—२०.०० अजिल्द
२४.०० सजिल्द

प्राप्तिस्थानानि—
( १ ) प्रकाशकस्थानम् ।
( २ ) आर्ष गुरुकुल महाविद्यालय,
आबू पर्वत ( जि० सिरोही )
[ ३०७५०१ ]
( ३ ) समर्पण-शोध-संस्थानम्,
४/४२ सेक्टर नं० ५, राजेन्द्रनगर,
साहिबाबाद ( जि० गाजियाबाद )
[ उ. प्र. ]

मुद्रक—ज्योतिष प्रकाश प्रेस,
कालभैरव मार्ग, वाराणसी ( २२१००१ )



स्व० "शान्ता आर्य" महोदयायाः
सुजानगढ़ ( चूरू-राजस्थान ) निवासिनोः
पूजनीय-पित्रोः



'पं० गणपतिशर्म्मा'      'श्री० पूर्णदेवी शर्म्मा'

इत्यनयोः
यशस्विनोः करकमलयोः
पाणिनीयशब्दानुशासनस्य प्रत्नसंस्कार-
समन्वितम् अभिनवं संस्करणमिदं
सप्रश्रयं समर्प्यते
कृतज्ञेन
सत्यानन्द-वेदवागीशेन
सुमित्राजानिना ।

# विषयानुक्रमणिका



# निवेदनम्

ऐहिकामुष्मिकसुखावाप्तये ज्ञानविज्ञानोपलब्धये पारस्परिकलोकव्यवहाराय च शब्दज्ञानमनिवार्यम्। व्याकरणज्ञानं च शब्दज्ञानस्य लघुतमोपायः। समुपलब्धव्याकरणेषु च पाणिनीयव्याकरणमेव परिपूर्णम्मूर्धन्यम्प्राचीनतमञ्च। तत्र व्याकरणाध्ययनस्य द्वे पद्धती व्यवह्रियेते सम्प्रति। एका लक्षणप्रधानाऽपरा च लक्ष्यप्रधाना। आचार्यप्रोक्तसूत्रादिक्रमेणैव यत्राध्ययनाध्यापनादि विधीयते सा लक्षणप्रधाना। यत्र तु लक्ष्यम्मुख्यतयाऽक्षिलक्षीकृत्य व्युत्क्रमेणापि सूत्रव्याख्या प्रस्तूयते तत्प्रयोगश्च क्रियते सा लक्ष्यप्रधाना। अनयोः प्रथमा सम्प्रति 'प्राचीनव्याकरणम्' इत्यपरा च 'नव्यव्याकरणम्' इति नाम्नाऽभिज्ञायते। नाम्नैव स्पष्टमिदं यल्लक्ष्यप्रधानेयं पद्धतिरर्वाचीनाऽस्ति। लक्ष्यप्रधानाया अस्याः शैल्याः प्रतिपादकानाम्प्रक्रियाग्रन्थानां रूपावतार-प्रक्रियाकौमुदी-सिद्धान्तकौमुदीप्रभृतीनां रचना क्रमशो द्वादश्याः शताब्द्या आरभ्य षोडशशताब्दीपर्यन्तकाले बभूव। विक्रमार्कस्य द्वादश्याः शताब्द्याः प्राङ्नामापि कश्चिन्न विवेदाऽस्याः पद्धतेः। तदा सर्वे पाणिन्याद्याचार्य-प्रोक्तक्रमेणैव व्याकरणमधीयते स्म। नानाशास्त्रकृतो महाकाव्यानां काव्यानाञ्च प्रणेतारो विपश्चितो ऽनयैव सरण्या सूत्रक्रमात्मिकया व्याकरणमधीत्य शब्दशास्त्रपारङ्गता बभूवुः। वृत्तिफक्किकादिघोषणात्मकानां प्रक्रियाग्रन्थानाम्प्रचलनेन व्याकरणज्ञानं दुरूहतामापेदे। शनैः शनैश्च व्याकरणाध्ययनं विरलताञ्जगाम।

व्याकरणाध्ययनस्य दुरवस्थामिमां विलोक्य विक्रमस्य नवदश्यां शताब्द्यां जयपुराधीश्वरस्य सवाई-श्रीरामसिंहमहाराजस्य वन्दनीयेन, अलवर-महीपतेः श्रीविनयसिंहमहाराजस्य च व्याकरणाध्यापकेन नानाशास्त्रार्णवपारावारीणेन प्रज्ञाचक्षुषाऽशेषशेमुषीजुषा वैयाकरणशिरोमणिना मथुरावासिना श्री विरजानन्ददण्डिस्वामिना पुनरपि सूत्रक्रमाध्ययनशैल्याः सूत्रपातोऽकारि, शतशश्च शिष्या अनेन क्रमेण व्याकरणमध्याप्य विद्वांसो विदधिरे। तेष्वन्यतमेन तदन्तेवासिना प्रसिद्धवैदिकधर्मसंरक्षकेण ऋषिप्रणीतग्रन्थानां परमपक्षग्राहिणा महाभाग-श्रीदयानन्दसरस्वती-स्वामिनाऽस्याः शैल्याः प्रचाराय सुमहान् प्रयासो व्यधायि। तच्छिष्य-प्रशिष्यपरम्परायाञ्चः श्री पं० गुरुदत्तविद्यार्थि-श्रीशुद्धबोधतीर्थ-श्रीपं०ब्रह्मदत्तजिज्ञासु-श्रीपं०शङ्करदेवमहाभाग-पं० युधिष्ठिरमीमांसक-पं० पद्मनाभाचार्य-पं० ज्योतिःस्वरूपाचार्य-पं० राजेन्द्राचार्य-आचार्यबलदेव-डॉ०विजयपाल-डॉ०प्रज्ञादेवी-आचार्या शान्तिदेवी-स्वामिव्रतानन्दमहोदय-पं०भीमसेनवेदवागीश-स्वामित्यागानन्द-

महाभाग-श्रीमद्-ओमानन्दसरस्वतीत्यादि-विपश्चितां तपस्विनाञ्च प्रयत्नेन प्राचीनव्याकरणस्य पठनपाठनं नानागुरुकुलेषु संस्कृतमहाविद्यालयेषु पाठशालासु च सोत्साहं ससाफल्यञ्च प्रवृत्तिं लेभे साम्प्रतम्प्रचलति च ।

अस्य क्रमस्योपादेयतामनुवीक्ष्यैव वाराणसेय (सम्पूर्णानन्द)-संस्कृत-विश्वविद्यालयस्य जयपुरीय-राजस्थानविश्वविद्यालयस्य रोहतकीय-महर्षिदयानन्द-विश्वविद्यालयस्य च मध्यमा-शास्त्रि-आचार्य-परीक्षाणां पाठ्यक्रमेषु प्राचीनव्याकरणस्य समावेशो बहोः कालात्पूर्वमेवाऽक्रियत ।

नाना गुरुकुल-विद्यालय-महाविद्यालयेषु व्याकरणाध्यापनङ् कृतवत एषाम्पङ्क्तीनां लेखकस्यापि स्वानुभवोऽयं यत्सूत्रक्रमाध्यापनाऽध्ययन-पद्धतिरेव साधीयसी सरलतरा स्वल्पकालेनैव शब्दबोधकरी चास्तीति ।

प्राचीनक्रमेणाध्येतॄणाङ् कृते मूलपाणिनीयशब्दानुशासनस्य ज्ञानङ् कण्ठीकरणञ्चानिवार्यतयाऽऽवश्यकं वर्त्तते । नव्यशैल्या व्याकरणानुशीलिनामपि कृते मूलपाणिनीयसूत्रादिज्ञानं तद्वदेव महदुपकारि साहाय्यकृच्च खलु ।

पाणिनीय-शब्दानुशासनेऽष्टाध्यायीसूत्रपाठ उणादिप्रत्ययविधायकसूत्र-पाठो लिङ्गानुशासनसूत्रपाठो धातुपाठो गणपाठश्चेति पञ्चपाठी गण्यते ।

चिराय मे मनसि पञ्चपाठ्या अस्या विशिष्टमेकं संस्करणम्मुद्रापयितु-मासीदभिलाषः । स च परमेश्वरस्य कृपयाऽधुना पूर्त्तिमभजत । संस्करणेऽस्मिन्नधोऽङ्कितानि वैशिष्ट्यानि सन्ति ।

१. अत्र पाणिनिप्रोक्तः सर्वोऽपि व्याकरणपाठः—सकलापि पञ्चपाठी ह्येकस्मिन्नेव ग्रन्थे सहैव प्रादीयत ।

२. इत्सञ्ज्ञाभाविनः सर्वेऽप्यचोऽत्र सानुनासिकचिह्ना अमुद्राप्यन्त ।

३. धातुपाठस्य सर्वेऽपि धातवोऽनुदात्तस्वरितादिस्वरचिह्नैरङ्किता अक्रियन्त । चुरादिगणीयादन्तधातुषु कण्ड्वादिगणधातुषु च नेदमक्रियत ।

४. उणादिसूत्रपाठ-धातुपाठ-गणपाठादीनां केषाञ्चिद् भ्रष्टपाठानां समुद्धारो व्यधीयत ।

५. अन्ते पाणिनीय-शिक्षासूत्राण्यपि प्राकाश्यन्त ।

६. परिशिष्टभागे वार्त्तिकगणपाठं परिभाषापाठं फिट्सूत्रपाठञ्च समयोजयाम ।

७. सर्वान्ते धातुवर्णानुक्रमणिकाऽदीयत । तत्रापि धातवस्स्वरचिह्नैरनुनासिकचिह्नैश्च सहिता अमुद्राप्यन्त ।

८. गणपाठं विहाय सर्वोऽपि मुख्यो ग्रन्थः स्थूलाक्षरेषु समसुद्राप्यत ।

अस्य वैशिष्ट्याष्टकस्य विषये किञ्चिद् विशदय्याधस्ताल्लिख्यते—

## १. पञ्चपाठ्या एकत्र सङ्ग्रहः

नानास्थानेषु मुद्रितान्यष्टाध्यायीसूत्रपाठ-धातुपाठप्रभृतीनां पृथक् पृथक् पुस्तकान्युपलभ्यन्ते। तेनावृत्तिकरणे पठने बोधने च महत्काठिन्यञ्जायते। अष्टाध्यायीमधीयानाश्छात्रा अपि धातुपाठोणादिपाठगणपाठादीनामध्ययने शिथिलादरा दरीदृश्यन्ते। यदा पुस्तं हस्ताङ्कगतं स्यात्तदा तु कश्चित्तदध्यनाय समुत्सहेत नाम। पुस्तको यदि दृग्गोचरीभूतो न स्यादायासलभ्यो वा स्यात्तर्हि स्वत उत्साहच्छेदो जायते। अत्र संस्करणे पञ्चपाठ्याः सहैवोपलभया दैनिकावृत्तिकरणे, परामर्शे, बोधनेऽध्यापने च महत्सम्पत्स्यते सौकर्यम्।

## २. इत्सञ्ज्ञिनामचां सानुनासिकचिह्नत्वम्।

पाणिनीयशब्दानुशासने त्रिविधा खल्वित्सञ्ज्ञा विधीयते। अचां हलामञ्झलसमुदायानां च। तत्रान्त्यहलो, यथानिर्देशं प्रत्ययादौ वर्त्तमानानां चवर्गीय-टवर्गीय-कवर्गीयहलां षकारलकारशकारहलां, धात्वादौ वर्त्तमानानां ञिटुडूनामञ्झलसमुदायानां चेत्सञ्ज्ञाकरणे न कापि क्लिष्टतोत्पद्यते।

परम्, 'उपदेशेऽजनुनासिक इत्' इति सूत्रेणाचामित्सञ्ज्ञाकरणे काठिन्यम्प्रतीयते। कुचुटुतुपु इत्येतेषामुकारस्य, धातुषु—पठ-अद-श्विता-इदि-दीपी-कुजु गुहू-ऊर्णुञ्-काशृ-गम्लृ-लगे-भुजोप्रभृतीना मन्त्यस्याचः, ओवै-ओहाक्-ओहाङ् इत्यादीनामाद्यस्याचः, ईशुचिर्- उभ्रस-उबुन्दिर्-ओविजी-प्रभृतीनामाद्यान्त्ययोरचोरित्सञ्ज्ञा विधीयते। अत्रेत्सञ्ज्ञाकरणे किं मानम्? सूत्रकार उपदेशे वर्त्तमानस्यानुनासिकस्याच इत्सञ्ज्ञामाह। अनुनासिकचिह्नप्रयोगाभावे चोपरिनिर्दिष्टदृष्टान्तधातुषु कस्यचिद्विशिष्टस्यैवाच इत्सञ्ज्ञाकरणेऽन्यस्यान्येषां वाऽचामकरणे को हेतुः? यदि पठ-अद-इदि-भुजोप्रभृतीनामन्त्यस्याच इत्सञ्ज्ञा विधीयते तर्हि कथन्न विधीयत आद्यस्याप्यचः? ओवै-ओहाक्-ओहाङ् इत्यादीनामन्त्यस्याचः कथन्न क्रियत इत्सञ्ज्ञाऽऽद्यस्यैव चाचः कुतः? अन्यच्च धातुषु तावदाद्यभूतानां प्रायेण सर्वेषामोकाराणामित्सञ्ज्ञाकरणे ओखृ-ओणृ धातू कथं त्यज्येते? ईशुचिर्-ओविजी प्रभृतीनामाद्यान्त्ययोरेवाचोरित्सञ्ज्ञायै ग्रहणे कथम्प्रवृत्तिः कुतो न मध्यमान्त्ययोराद्यमध्यमयोर्वाऽचोर्ग्रहणङ्क्रियेत? अनुनासिकचिह्नप्रयोगाभावे सर्वमेतदनिश्चितमिव।

कैश्चिद्वैयाकरणैरेतदर्थम् 'प्रतिज्ञानुनासिक्याः पाणिनीयाः'[१] इति सिद्धान्तो घटितः। प्रतिज्ञयाऽनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः पाणिनिशिष्या इति च तद्व्याख्यातारः[२] प्रोचुः। परं, का सा प्रतिज्ञा? किं

---

१. काशिकाकृज्जयादित्यवचनम्। 'उपदेशेऽज०' सूत्रवृत्तौ।
२. न्यासकृतो जिनेन्द्रबुद्धेः 'उपदेशेऽज०' सूत्रव्याख्या द्रष्टव्या।

स्वरूपा ? कुत्र चाचार्येणाऽकारि सा ? अद्यतन-प्रचलित-धात्वादिस्वरूपसन्तुष्टानान्तु सा खपुष्पायितेव खलु । अस्याः प्रतिज्ञाया वर्त्तमानं व्यावहारिकं स्वरूपन्तु वस्तुतो गुरुशिष्यपरम्परयेत्सञ्ज्ञाभाविनामचाम्मुखेन बोधनमेवाऽऽस्थितमस्ति । गुरवोऽध्यापका बोधयन्त्यत इमेऽच इत्सञ्ज्ञाभाविनः सन्तीत्येवम्मत्वैवादौ शिष्या इत्सञ्ज्ञाकरणे प्रवर्त्तन्ते । सुबोधत्वे समासादिते सति त्वित्सञ्ज्ञाफलादि दृष्ट्वापि तेषामत्र प्रवृत्तिर्जायते । परमिदङ्क्लेशकरमेव खलु । इत्सञ्ज्ञाभाविनोऽचो यद्यनुनासिकचिह्नैरनङ्कितास्तिष्ठन्ति तर्हि सुबोधानामपि बहुत्र संशयो जायते । ते 'श्विता' धातोराकारमितं वीक्ष्य 'दरिद्रा' धातोरप्याकारस्येत्सञ्ज्ञाकरणे प्रवर्त्तन्ते । 'चकासृ' धातोर्ऋकारमिव 'जागृ' धातोरप्यृकारमित्करणाय गृह्णते । 'इदि' 'णिसि' प्रभृतीनामन्त्यमिकारमितं कुर्वाणाः 'चिरि' 'जिरि'[1] धात्वोरप्यन्तिमस्येकारस्येत्सञ्ज्ञायै धावन्ते । 'बलेर्गुक् च'[2], 'फलेर्गुक् च'[3], 'लक्षेर्मुट् च'[4], 'अदेर्मुट् च'[5] इत्यादिसूत्रस्थिताऽऽगमानामुकारमितं विदधानाः 'ह्रियः कुक् रश्च लो वा'[6], 'डित्खनेर्मुट् चोदात्तः'[7], इत्यत्राप्यागमोकारस्येत्सञ्ज्ञायै समुत्सहन्ते ह्यापाततः । 'मिथुने मनिः'[8], 'स्पृशोऽनुदके क्विन्'[9], 'जनसनखनक्रमगमो विट्'[10] इत्यादिषु प्रत्ययस्यान्त्यमचमित्सञ्ज्ञापात्रमवलोक्य 'ग्रहेरनिः'[11], 'जॄशॄस्तृजागृभ्यः क्विन्'[12], 'वृदृभ्यां विन्'[13], इत्यत्रापि वर्त्तमानं प्रत्ययान्तमचमित्पात्रतां ग्राहयितुं प्रवर्त्तन्ते ।

एवमनेकत्र सन्दिहानानां सन्देहदशायाः समुच्छेदायास्माभिरस्मिन् संस्करणे सर्वत्रेत्सञ्ज्ञाभाविनोऽचोऽनुनासिकचिह्नेन ँ एवंविधेन समङ्किता एवाऽदीयन्त । क्वचिदपि नसंशयानेभ्यो महद्भ्यस्तु नो नमो नमः । नैतत्प्रयत्नन्तेषां कृते । यथास्थितिसन्तुष्टानां प्रतिप्रक्रमं दोषदर्शनाय कृतक्षणानां विचक्षणानाञ्च कृते किमपि निवेदनीयन्नावशिष्यते । तेषां विदर्शने तु दुषधातोरिवास्माकंगुणोऽपि दोषाय कल्पेतेत्यलम् । गुणमात्रसङ्ग्रहणप्रवणानां सहृदयानां समुल्लासायेदमनुनासिकचिह्नादिप्रकाशनम् ।

वस्तुतस्तु 'मुखनासिकावचनोऽनुनासिकः' इयमेव पाणिनेरनुनासिकविषयिणी प्रतिज्ञा । यो वर्णो मुखसहितया नासिकया समुच्चार्यते स एव पाणिनिनाऽनुनासिकः प्रत्यज्ञायत । तादृशस्य वर्णस्याभिज्ञानाय च लिप्यां

१. स्वादि. ३० । २. उणा. १.११ । ३. उणा. ३.५६ । ४. उणा. ३.१६० । ५. उणा. २.१०७ । ६. उणा. ३.८४ । ७. उणा. ५.२० । ८. उणा. ४.१५२ । ९. अष्टा. ३.२.५८ । १०. अष्टा. ३.२.६७ । ११. उणा. ५.६७ । १२. उणा. ४.५४ । १३. उणा. ४.५३ ।

ँएवंरूपश्चन्द्रबिन्दुः प्रयुज्यते। अनुनासिक-वर्णोच्चारणे नासिकायाः प्रयोग आवश्यकतमः। तथा च विद्वांसः—

क. 'यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता तथापि नासिकामनुगत इति योगाश्रयेणैव गतार्थत्वादनुनासिकसञ्ज्ञासूत्रं मन्द-प्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम्' †।

ख. 'नासिकानुगत इति। नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः। प्रातिशाख्य-शिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्' ‡।

एवं सुधीजनाभिमतानुनासिकत्वसूचनायैवास्माभिस्तादृशं 'ँ' स्वरूप-मनुनासिकचिह्नम्प्रायुज्यत। यथा-चुँ-लिँट्-णिनिँ:-क्विँप्-यासुँट्-नुँक्-पठँ-अदँ-दीपीँ-ओँहाक्-ओणृँ-ओँव्रश्चूँ-श्विताँ इत्यादिषु। यत्र चाऽचो नेष्टा खल्वि-त्सञ्ज्ञा तत्र ँ चन्द्रबिन्दुर्नादीयत। यथा—जागृ-कथ-चिरि-जिरि-ह्रियः कुक्०-डिखनेर्मुट्०-ग्रहेरनिः-वृद्भ्यां विन् इत्यादिषु।

न च त्वया नवीन एव कश्चित्पन्थाः समाश्रीयत इति वाच्यम् प्राचीना-नामपि विदुषामत्रैवानुकूलाभिप्रायदर्शनात्। सूत्रकारः पाणिनिराचार्य इत्सञ्ज्ञाभाविनोऽचः सानुनासिकानेवोपदिदेशेत्यस्माकं दृढम्मतम्। नैके पौरस्त्याः पाश्चात्याश्च विपश्चितोऽप्येवम्मेनिरे। तेषु वैयाकरणमूर्धन्ययो-र्द्वयोः सुधियोर्वचनान्यत्रोदाह्रियन्ते—

१. हरदत्तमिश्रः—'ननु च सर्वत्रात्र शुद्धोऽच् पठ्यते नानुनासिक इत्यत आह 'प्रतिज्ञानुनासिक्याः' इति। प्रतिज्ञामात्रेण समधिगम्यमानुनासिक्यं येषां ते तथोक्ताः। ..तच्च प्रतिज्ञानं नानियमेन भवति, किं तर्हि ? यत्रा-चार्याः स्मरन्ति तत्रैव। सूत्रकारेण तावद्विवक्षिताः सर्वेऽनुनासिकाः पठिताः 'डुलभँष्' प्राप्ताविति वत्। लेखकैस्तु सङ्कीर्णा लिखिताः, तत्र स्मृतिपरम्परया निर्णयमित्यर्थः'[1]।

२. भट्टोजिदीक्षितः—(i) 'यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः'[2]।'

† प्रौढमनोरमा—'उपदेशेज०' सूत्रस्थकौमुदीवृत्तिव्याख्या। ‡ शब्दरत्नम्—उपर्युद्धृतप्रौढमनोरमावाक्यस्य टीका। १. पदमञ्जरी—'उपदेशेऽज०' सूत्रवृत्ति-व्याख्या। २ प्रौढमनोरमा—'उपदेशेऽज०' सूत्रकौमुदीव्याख्या।

(*ii*) 'तत्र शास्त्रकृता पठितस्याप्यनुनासिकस्य पाठ इदानीमपभ्रष्टः। अतएवाहुर्वृत्तिकाराः 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति[1]।'

इत्थमेव न्यासकारो जिनेन्द्रबुद्धिस्तत्त्वबोधिनीकारो ज्ञानेन्द्र-सरस्वती च प्राहतुः।

एवञ्च यदा प्राञ्चोऽर्वाञ्चश्च मन्यन्ते यत्सानुनासिक एवाऽऽससूत्रकृतः पाठः स चेदानीम्भ्रष्ट इति तदा कथङ्कारन्तस्य मूलपाठस्य समुद्धाराय प्रयत्नो न विधीयेत। कामं सुदीर्घकालविच्छिन्नस्य मूलानुनासिकपाठस्य समुद्धारे दोषाणां सम्भावनाः स्युः। परं दोषाणां सम्भावनाभियैव तु कार्याणि कार्याणि नहि नारभ्यन्ते। नहि मृगाः सन्तीति यवा नोप्यन्ते, न च भिक्षुकाः सन्तीति स्थाल्यो नाधीश्रीयन्ते। दोषाश्च भवन्ति कर्माणि चारभ्यन्ते, दोषाणां परिहाराय च प्रयत्यते।

अत एवास्माभिस्साहसिकमिव विभाव्यमानमेतत्कर्माऽक्रियत। न च सर्वथैवानाघ्रातपूर्वोऽयं विषयोऽन्येन केनापीति वाच्यम्। सपरिश्रमं संस्कृत-पठनपाठनस्य सरलतमोपायानां सततं गवेषकैर्विद्वच्छिरोमणिभिः श्री पं० ब्रह्मदत्तजिज्ञासुमहाभागैरप्यंशतोऽत्र प्रक्रमो व्यधायि। तद्रचिताष्टाध्यायी-भाष्यादिग्रन्थानां विलोकनेनाञ्जसाऽनुमातुमेतच्छक्यते। यदि नाहं विस्मरामि तर्हि दिल्लीवास्तव्यैर्व्याकरणशास्त्रे कृतभूरिश्रमैः श्रीवैद्यराज पं० भीमसेनमहोदयैरपीदं सत्यमुररीकृत्य लघुसिद्धान्तकौमुद्याः स्वरचितायां विस्तृत-हिन्दी-व्याख्यायां सुबादयः प्रत्यया यथायथं सानुनासिका एव प्रादर्श्यन्त। सोऽयम्पूर्वजैः प्रक्रान्त एव विषयोऽस्माभिः पूर्णतामापाद्यत।

एवं मुद्रितान् सानुनासिकचिह्नान् प्रत्ययान् क्त्वात्वादींश्च दृष्ट्वाऽनभ्यासादर्शने तथैवोच्चारणे च किमपि विचित्रमिव वा नवीनमिव वा कठिनमिव वाऽनुभाविष्यते ह्यापाततः। परमेतत्तु कस्यचिदप्यनभ्यस्तकर्मणः प्रारम्भे भवत्येव। अभ्याससरणीं समारूढे सति तु न किमपि नवीनन्तिष्ठति। अतः समेऽपि सुहृदया मतिमन्तः सविनति प्रार्थ्यन्ते यत्ते स्वीयं नीरजस्तमस्कं मनोऽस्याम्प्रणाल्यां नियुञ्जीरन्। वस्तुत इयमेव रीतिरसंशीतिः सद्यः सुबोधयित्री च खलु।

## ३. धातुषु स्वरचिह्नाङ्कनम्।

अत्र धातुपाठे पठितास्सर्वे धातवः स्वरचिह्नैरप्यङ्किताः प्राकाश्यन्त। यदा वेदे स्वरज्ञानाय स्वरचिह्नानि प्रयुज्यन्ते तर्हि धातुपाठादिष्वपि सम-

१. शब्दकौस्तुभ, पृष्ठसं. ५५ चौखम्बासंस्करणम्, ई. १९२९।

प्रयुज्येरन्? 'एकाच
पेक्षितस्वराणां परिज्ञानाय तानि चिह्नानि कुतो न
उपदेशेऽनुदात्तात्'[1], 'नोदात्तोपदेशस्य मान्तस्यानाचमेः'[2], 'अनुदात्तो-
पदेशवनति०'[3], 'अनुदात्तङित आत्मनेपदम्'[4], 'स्वरितञितः कर्त्र-
भिप्राये०'[5], इत्यादिसूत्रैः स्पष्टं सूच्यते यत् पाणिनिना सूत्रकृता स्वधातुपाठे
सर्वे धातव उदात्तानुदात्तस्वरिताख्यस्वरैर्वर्णधर्मैर्युक्ता एवोपादिश्यन्त। सर्वांश्च
धातूनुदात्ताद्युच्चारणयुक्तानेव स्वशिष्यानध्यापयामास। लेखने च तान्
स्वरबोधकचिह्नयुक्तानेव लिलेख लेखयाम्बभूव वा। स च तथाविधः स्वर-
चिह्नयुक्तः पाठः सानुनासिकपाठवत् सर्वथैव भ्रष्टतामियाय। तस्य भ्रष्ट-
सस्वरपाठस्य समुद्धारायैवास्मिन् संस्करणे समचेष्टयत।

किञ्च यदा वेदमन्त्राणां सस्वरोच्चारणं गुणाय कल्पते तदा धातुपाठस्थ-
धातूनां सस्वरोच्चारणमगुणाय कथं कल्पेत। यथा च वेदमन्त्राणां सस्व-
राङ्कनलेखनम्मुद्रापणमेव चात्यन्तमावश्यकन्तथैव धातूनामपि सस्वरचिह्न-
लेखनं मुद्रापणञ्चाप्यनिवार्यम्। प्रत्युत यथा वेदमन्त्राणां उदात्तादिस्वर-
विरहितोच्चारणं (यज्ञकर्म विहाय) स्वरादिरहितलेखनञ्च सर्वथैव दोषा-
वहं तथैव धातूनामपि स्वरचिह्नविरहितोच्चारणलेखने अपि दोषकृती खलु।
एतद्विचार्यैवास्माभिरत्र धातवः स्वरचिह्नयुक्ता अमुद्राप्यन्त।

अत्रेत्सञ्ज्ञाऽपेक्षिता अचोऽनुनासिकचिह्नोपेतास्तु सन्त्येव, तेषु ये येन
स्वरेण युक्तास्सन्ति तान् तत्तत्स्वरबोधकचिह्नेनापि समयूयुजाम। येषा-
न्धातूनामित्सञ्ज्ञोऽच् उदात्तोऽस्ति तत्र किमपि स्वरचिह्नन्नोदटङ्कयत।
इत्सञ्ज्ञी योऽच् अनुदात्तोऽस्ति स अधोरेखयाऽऽङ्क्यत। यथा-एधँ,
स्फायीँ, ओँप्यायीँ इत्यादि। य इत्सञ्ज्ञोऽच् स्वरितोऽस्ति स ऊर्ध्वरेखया
प्रादर्श्यत। यथा-मृषँ, राजृँ, ईँशुचिँर्, उँबुन्दिँर् इत्यादि। ये धातवो-
नुदात्तास्सन्ति तत्राधोरेखा प्रादीयत। यथा-जि, हन्, वचँ, गम्लृँ, दृशिँर्,
रभँ, भजँ इत्यादि। उदात्ता धातवस्तु स्वरचिह्नविरहा एव बोद्धव्याः।
येषु धातुषु तावत्स्वरितेनानुदात्तेन वेत्सञ्ज्ञिनाऽचा सहान्यस्याप्यचः प्रका-
रान्तरेणेत्सञ्ज्ञा भवति तत्रापि (=ञिटुडु इत्येवंरूपाणामज्झल्समुदाया-
नामित्सञ्ज्ञाप्रसङ्गे) सोऽच् यथायथं स्वरितो वाऽनुदात्तो वाऽमुद्राप्यत।
यथा-ञिमिदाँ, ञिइन्धीँ, टुवेपृँ, डुवपँ, डुलभँष् इत्यादि। कथं यद्
यदाऽस्मिन् संस्करणे सर्वत्र धातुपाठे धातुषु स्वराङ्कनं विधीयते, तदा यत्रैवा-

१. अष्टा. ७.२.१०। २. अष्टा. ७.३.३४। ३. अष्टा. ६.४.३७। ४. अष्टा. १.३.१२। ५. अष्टा. १.३.७२।

धोरेखा प्रयुज्यते सोऽनुदात्तो यत्रैव चोर्ध्वरेखा प्रदीयते स स्वरितः। शिष्टश्च सर्व एवाऽनुदात्त एव। एवं सति 'टुवेपृ' आदिषु यदि टुआदयः स्वरचिह्नेनानङ्किता स्तिष्ठेयुस्तर्हि तेऽपि खलूदात्ता अवगम्येरन्। तदा चानिष्टापत्तिः प्रसज्येत। धातोरेकांशस्यानुदात्तेत्त्वादात्मनेपदम्भवेदन्यस्य चांशस्योदात्तेत्त्वात् = अनुदात्तेत्त्वस्वरितेत्त्वाभ्यां शेषत्वमवगम्येत, तदा च शेषात्कर्त्तरीति परस्मैपदमपि सम्भवेत्। एतन्निवारणाय प्रकारान्तरेत्सञ्ज्ञिनोऽचोऽपि स्वस्वधातुसंवादीत्सञ्ज्ञाऽवत् तत्तत्स्वरचिह्नेन संवलिता अक्रियन्त।

येऽनेकाचो धातव उदात्ताः सन्ति तत्रान्त्यस्यैवाच उदात्तता सुलभा 'धातोः' ( अष्टा. ६.१.१५६ ) अन्त उदात्तो भवतीत्याचार्यनिर्देशात्। अतोऽनेकाक्षु धातुष्वन्तिमं विहायान्येऽचोऽनुदात्ता निष्पद्यमाना अधोरेखयाऽत्र निरदिश्यन्त। यथा—जा॒गृ, च॒कास॒ृँ, ऊ॒र्णु॒ञ्, दी॒धी॒ङ्, द॒रि॒द्रा। चुरादिगणीयादन्तधातुषु 'कथ' आदिषु व्यवस्थेयमनवधानान्न कर्तुमपार्यत। कण्ड्वादि। गणस्थधातुष्वपि स्वराङ्कनमवाशिष्यतैव।

## ४. भ्रष्टपाठ-समुद्धारः

उणादिसूत्रपाठे धातुपाठे च वर्त्तमानानां केषाञ्चिद् भ्रष्टपाठानां समुद्धारं वयमकुर्म। स च यथापाठमधो विशदय्य विविच्यते—

### उणादिसूत्रपाठे

उणादिसूत्रेषु यत्रयत्रास्माभिः पाठान्यत्त्वं व्यधायि तेषां समीक्षणाय पूर्वपाठोऽस्मत्पाठश्चाधो विन्यस्येते—

| | प्रचलितः पाठः | अस्मत्पाठः |
|---|---|---|
| उ. १.६२ | कबेरोतच्पश्च। | कबेरोतः पश्च। |
| उ. १.६६ | कपि···भ्य ओलच्। | कपि···भ्य ओलः। |
| उ. १.६७ | मीनातेरूरन्। | मीनातेरूरः। |
| उ. १.११६ | स्था···लीयचः। | स्था·· लीयरः। |

कपोतशब्दः सर्वत्र वैदिकवाङ्मये मध्योदात्त एव दृश्यते। यथा—'क॒पोत॑ इव गर्भ॒धिम्' ( ऋ० १.३०.४ ), 'यत्क॒पोतः॑ प॒दम॒ग्नौ कृ॒णोति॑' ( ऋ० १०.१६५.४ ), 'मि॒त्रावरु॑णाभ्यां क॒पोता॑न्' ( य० २४.२३ ), 'शि॒वः क॒पोत॑ इषि॒तो नो॑ अस्तु' ( अथ० ६.२७.२ )। अतः प्रत्ययस्य चित्करणं प्रामादिकमेव। ओत इति प्रत्यये सति प्रत्ययाद्युदात्तत्वाच्छब्दो मध्योदात्तः खलु। सिद्धान्तकौमुदीकारोऽपि 'कबेरोतः पश्च' इत्येव पपाठ। तदू

व्याचक्षाणश्च तत्त्वबोधिनीकृदाह—'अत्र ओतचश्चित्त्वं प्रामादिकम् । 'यत्कपोतः पदमग्नौ कृणोति'⋯इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैवोपलभ्यमानत्वादित्याहुः' ।

कपोलशब्द ऋग्वेदखिलसूक्ते ( २.१२.३ ) प्राप्यते । तत्र च सोऽपि मध्योदात्त एव । अतोऽत्रापि प्रत्ययचित्करणमनिष्टमेव । ओल इति प्रत्ययेनैवेष्टसिद्धेः । गडोलादयः शब्दाः स्वरक्षेत्रीयवाङ्मये नोपलभ्यन्ते ।

मयूरशब्दोऽपि स्वरप्रयुक्तवाङ्मये सर्वत्र मध्योदात्त एव पठ्यते । यथा– 'अश्विभ्यां मयूरान्' ( य० २४.२३ ), 'मयूरः सुपर्णस्ते' ( य० २४.३७ ) । अतः प्रत्ययस्य नित्पाठः प्रामादिक एव । नित्त्वाद्धि शब्दाद्युदात्तत्वम्प्रसज्येत ।

मार्जालीयशब्दो यजुर्वेदे ( ५.३२ ) समुपलभ्यते । तत्र च स उपोत्तमोदात्तः । यथा–'शुन्ध्यूरसि मार्जालीयः' । अतश्चित्त्वकरणमस्यानिष्टावहम् । चित्त्वे सति शब्दान्तोदात्तत्वप्रसक्तिः । 'अलीयर्' इति पाठे तु रित्त्वाद् 'उपोत्तमं रिति' ( अ० ६.१.२११ ) इति सूत्रेण शब्दस्योपोत्तमस्याच उदात्तत्वमिष्टं सिद्ध्यति ।

उणादि सूत्रपाठे निपातनेनोपदिष्टानां शब्दानां सस्वरमुद्रापणेऽस्माभिः प्रयत्नोऽक्रियत । यथोपलब्धस्वरञ्च तेषु स्वराङ्कनमकारि । यथा-पर्जन्यः ( ३.१०३ ), खलतिः ( ३.११२ ), अम्बरीषः ( ४.२९ ), गभीरगम्भीरौ ( ४.३५ ), पुरूरवाः ( ४.२३२ ), अप्सराः ( ४.२३७ ), अर्भकपृथुकपाका वयसि ( ५.५३ ) ।

## धातुपाठे

### ( i ) एकाचामुदात्तेत्त्वनिरासः

नैकेषु धातुपाठेषु ह्येकाचोऽपिधातव 'उदात्तेतः' इति विशेषणेन विशिष्टा मुद्रिता दृश्यन्ते । माधवीयधातुवृत्तौ ( १९६४ ई० वत्सरे काश्यां मुद्रिते स्वामिद्वारिकादासशास्त्रिसम्पादितसंस्करणे ) अनेकस्थलेषु वैचित्र्यमिदमवलोक्यते । यथा–२३८ पृष्ठे 'एतदादयो (=घेट् आदयो ) जयत्यन्ता अनुदात्ता उदात्तेतः ।', ३४१ पृष्ठे 'युप्रभृतय उदात्ता उदात्तेतः', ३४७ पृष्ठे 'द्यु अभिगमने । अनुदात्त उदात्तेत्', 'षु⋯। अनुदात्त उदात्तेत्' 'कुं शब्दे । अयमप्यनुदात्त उदात्तेत्' । २६५ पृष्ठे 'धयत्यायोऽनुदात्ता उदात्तेतः' ३९९ पृष्ठे 'गा स्तुतौ । अनुदात्त उदात्तेत्', ४७९ पृष्ठे 'अयं (=ध्रु ) गुवतिश्चानुदात्तौ उदात्तेतौ', ४८१ पृष्ठे रियत्यादयोऽनुदात्ता उदात्तेतः, ४८५ पृष्ठे 'सुवति-किरति-गिरतय

उदात्ता उदात्तेत:', ५२३ पृष्ठे 'शॄ हिंसायाम् । इतो गृणात्यन्ता उदात्ता उदात्तेन:' । एवमन्यत्रापि ।

इत्थमेव धातुवृत्त्यनुसारिधातुपाठ-पुस्तकेषु अजमेर-मुम्बापुर्यादिनगरेभ्यः प्रकाशितेषु विचित्रतेयमवलोक्यते । परमनौचितीमेवाञ्चति सर्वमेतत् । धातुवृत्तिकृतोऽनवधानतया वा जातं स्यात्, लिपिकृत्कृपया वैतत्स्खलितम्परम्परया ऽऽगतं स्यात्, कस्याप्यन्यस्य चेष्टितेन वा सञ्चितमेतद् भवेद्, विद्यते तु सर्वथैव चिन्त्यमेतत् । धातुवृत्तिसम्पादकस्य विद्वच्छिरोमणेरपि ध्यानाध्वनीनोऽयं विषयो न बभूवेति चित्रम् !

एकाचोऽपि धातोरच इत्त्वे सति तत्र किमवशिष्येत? व्यञ्जनमात्रमेव । इत्त्वे सति लोपस्यानिवार्यतयावश्यम्भावित्वात् । व्यञ्जनमात्रधातुसत्तायां सत्याञ्चानिष्टरूपप्रसक्तिः स्यात् । युधातोः 'य्ति य्तः यन्ति, य्ता, यकः, यनीयम् । गाधातोः अचो ऽभावे श्लुलभ्यं द्वित्वमेव न स्यात्तदा च 'ग्ति ग्तः गन्ति' इत्यादि । धेट् पाने इत्यस्य धति धतः धन्ति, गै शब्दे धातोः 'गति गतः गन्ति इत्यादीन्यनिष्टानि रूपाणि प्रसज्येरन् । अभीष्टानि च याति, जिगाति, धयति, गायतीत्यादीनि न सिद्ध्येरन् ।

न चेदं वाच्यम् 'उदात्तेत्' इति परस्मैपदिनः सञ्ज्ञा स्यादिति । तथाऽऽचार्येण क्वचिदप्यनुक्तत्वात् । अन्वर्थोऽयं शब्द उदात्तेदिति । उदात्त इद् यस्य स उदात्तेदिति । परपक्षजनतोषन्यायेन यदि कथमपि परस्मैपदिसञ्ज्ञत्वमुदात्तेच्छब्दस्य स्वीक्रियते चेत्तदा तु सर्वेऽपि परस्मैपदिनो धातव 'उदात्तेत्' इति तथाकथितसञ्ज्ञया सञ्ज्ञपिताः क्रियेरन् । तदा च 'जागृ निद्राक्षये; दरिद्रा दुर्गतौ; रि, क्षि, चिरि, जिरि, दृ हिंसायाम्; भू सत्तायाम् प्रभृतिपरस्मैपदिनाम्प्रसङ्गेऽपि 'उदात्तेत्' इति पदेनाङ्कितेन भाव्यम् । न च धातुवृत्तौ तथोपलभ्यते । कथमेतदर्धजरतीयत्वमाद्रियते? वस्तुगत्या त्वसतोऽशरणवरणमेव शरणमत्र ।

किञ्च, कस्माच्चिदपि धातोः परस्मैपदप्रत्ययविधानाय तस्योदात्तेत्त्वन्नावश्यकं खलु । शेषत्वमेव तत्रावश्यकम् । कस्माच्च शेषत्वम्? अनुदात्तेतः स्वरितेतश्च धातोर्यः शेषः तस्माद्धातोः (कर्त्तरि) परस्मैपदप्रत्ययप्रवृत्तिः । तथा च 'शेषात्कर्त्तरि परस्मैपदम्' इत्याचार्यवचनम् ।

सप्तदशभ्यो वर्षेभ्यः प्रागजमेरनगरीयवैदिकयन्त्रालयात्प्रकाश्यमानस्य धातुपाठस्य संशोधनं कुर्वतो मे ध्यानपथं धातुवृत्तिस्थानि स्खलितानि समायुः, तदा मया विषयोऽयम्प्रसिद्ध-वैयाकरण-शिरोमणीनां श्री पं०

युधिष्ठिरमीमांसकमहोदयानां पुरोऽस्थाप्यत। सत्यग्रहणे च सदा सद्य उद्यता मीमांसकपादाः सपद्येव पत्रेण स्वमतमस्मिन्विषय इत्थं व्यवृण्वन्—

'सोनीपत। दि० १९.७.६९।……धातुपाठस्येदानीमेव नूतनं संस्करणं प्रकाशितम्। तत्र आर्यसाहित्यमण्डलमुद्रिता अशुद्धयः प्रायः तथैव मुद्रिताः। दशस्वेव दिवसेषु मुद्रणमभूत्। यदि भवत्पत्रं पूर्वं प्राप्तमभविष्यत्तर्हि संशोधनमभविष्यत्। एकाचाम् इता निर्देशस्त्वयुक्त एव, कचिदपि स्यात्। अशुद्धिप्रदर्शनार्थं साधुवादः। अग्रिमसंस्करणे संशोधनं भविष्यति।……॥'

सिद्धान्तकौमुदीकारोऽपि विषयेऽस्मिन्नैव क्वचिदपि बभ्राम। तेनैकाऽधातुः क्वचिदपि 'उदात्तेत्' नैवाऽपठ्यत।

तदेवमेकाचान्धातूनामित्त्वनिर्देशोऽनुचित एव। अतोऽस्माभिरस्मिन् संस्करणे तादृशोऽनिष्टनिर्देशः क्वचिदपि नैवोपादीयत।

(ii) कृञ् धातोर्भ्वादिगणे पुनः समावेशः।

भ्वादिगणे 'धृञ् धारणे' धातोरनन्तरं ६४२ धातुसूत्राङ्केऽस्माभिः 'कृञ् करणे' इति धातुसूत्रं स्वीकुर्वद्भिः 'कृञ्' धातुर्बहोः कालादनन्तरं पुनरपि धातुपाठे समस्थाप्यत। अद्यत्वे समुपलभ्यमानानि सर्वाण्यपि धातुपाठपुस्तकानि माधवीयधातुवृत्तिपाठानुसारीणि सन्ति। तेषु प्रायः सर्वेष्वेव भ्वादौ 'कृञ्' धातुर्नैवोपलभ्यते। षट्शतेभ्यो वर्षेभ्यः प्रागयं धातुर्भ्वादिगणेऽप्यासीदिति निश्चप्रचम्। १३७२ तः १४४४ मितकालपर्यन्ते वैक्रमाब्दे वर्त्तमानेन माधवीयधातुवृत्तेः कर्त्रा श्रीसायणाचार्येणैव धातुरयं सर्वप्रथमं भ्वादिगणान्निराक्रियतेति सत्यम्। तथा च स अवोचत्—

'इत्यनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः [ भ्वादिगणात् ] अतो व्यत्ययेनेति सिद्धम्' ( ऋ० १.८२.१ सायणभाष्यम् )।

सायणाचार्य एतत्कर्म हरदत्तजिनेन्द्रबुद्ध्योरैकान्तिकमेकं वचनमनुसरन्नेव चकारेति स्पष्टम्। अत एव स धातुवृत्तौ ( भ्वादिगणीय धृञ् धारणे धातुव्याख्याने ) प्रोवाच—"अत्र केचित् 'कृञ् करणे' इति धातुं पठन्ति, तदनार्षम्। यदाहतुर्न्यासकारहरदत्तौ—'कःकरत्करति०' इत्यत्र व्यत्ययेन शबिति'।

स्वाभिप्राय मिममुपरिचर्चित-वेदमन्त्रभाष्येऽपि स प्रकटयामास-'करः। 'डुकृञ् करणे'।…तर्हि व्यत्ययेन शप्। ननु 'डुकृञ् करणे' इति भ्वादौ पठ्यते। अतो व्यत्ययः कस्मात् क्रियते, इति चेत्, नैवम्। यस्मादस्य धातोस्तत्र पाठोऽनार्षः। तथाहि 'कः करत्करति०' इत्यत्र यदाहतुर्न्यास-

कारहरदत्तौ 'व्यत्ययेन शबिति'। तस्मादस्य धातोर्भ्वादौ पाठो नास्तीति गम्यते'।

एवं न्यासकार-हरदत्तयोर्वचने समादरन्दर्शयता सायणेन कृञ् धातु-र्भ्वादिगणाद् बहिर्निराकारि भ्वादौ चास्य पाठोऽनार्ष इति च तेनोद्घोषि।

परं वस्तुतस्तु सायणकृतं भ्वादेः कृञो निराकरणमेवानार्षम्। सत्यासत्यपरीक्षकाः सुधियो मनागत्र चिन्तयन्तु। सायणकालात् प्राक् कृञ् धातुस्तनादिगणे भ्वादिगणे चाऽऽसीदिति तद्वचनादेव प्रत्यक्षमवगम्यते। तनादिषु तस्य पाठः करोति, कुरुते, करोतु, अकरोत् इत्यादीनाम् उ विकरणवतां शब्दानाम्परिसिद्धये, भ्वादिषु च पाठो धृञादिधातोरिव कृञ् धातोरपि करति, करतः, करन्ति, करते, करसे, करामहे, करतु, करताम् प्रभृतीनां शब्विकरणवतां पदानां साधनाय स्थित आसीत्। यद्यपि शब्विकरणवन्ति कृञो रूपाणि लोके सम्प्रति न सन्ति प्रसिद्धानि तथापि वैदिकवाङ्मये तेषां प्रचुरः प्रयोग उपलभ्यते। प्रायेणैकशतमितेषु स्थलेषु शब्विकरणवन्ति कृञ्धातुरूपाणि तत्र द्रष्टुं शक्यन्ते। यथा—

'शं नः करत्यर्वते' (ऋ. १.४३.६), 'शं नः करतो अश्विना' (ऋ.८.१८.८), 'किमु त्रयः करन्ति' (ऋ. १०.४०.२), 'कया धिया करसे' (ऋ. १०.२९.४), 'शृतं यदा करसि जातवेदः (ऋ. १०.१६.२), 'अर्वाञ्चमिन्द्रमवसे करामहे' (ऋ. १०.३८.४), 'अवत्तानां करत एवाश्विना' (य० २१.४३), 'यद्व आगः पुरुषता कराम' (अथ० १८.१.५२) एवं नैकलकारेषु सर्वेष्वेव पुरुषेषु वचनेषु च विद्यमानानां शब्विकरणवतां कृञो रूपाणां साधनाय भ्वादिषु धातोरस्य पाठः साधीयानावश्यकतमश्चासीत्।

केवलं न्यासकारहरदत्तयोर्वचने वीक्ष्य न्याय्यस्थानस्थितस्य धातोर्बहिष्करणमन्याय एव। कोऽयं वचनस्यातिभारः? कस्यापि वचनं स्याद् यदि तद्युक्तिप्रमाणविरुद्धं स्यात्तर्हि कथन्तत्र श्रद्धेयम्? नेयं सरणिः प्राक्तनानाम्। निरुक्तप्रवक्ता यास्को महर्षिर्गार्ग्यादीनां वचनादेव वेदशब्दानामनाख्यातजत्वन्नैव मेने। सडिण्डिमघोषं वदतःकौत्सस्य वचनादपि वेदमन्त्राणामानर्थक्यन्नैव स्वीचकार। प्रत्युत सयुक्तिप्रमाणमनयोर्वचनानाम्प्रत्याख्यानञ्चक्रे। एवमेव पुनर्वसोरात्रेयस्यापि चरकसूत्रस्थान एकादशाध्याये ऽयुक्तमतप्रतिवचनप्रयत्नो विलोकनीयः।

तदेवमत्र भ्वादिभ्यः कृञो निस्सारणात्प्राङ् न्यासकारहरदत्तयोर्वचनस्य परीक्षा कर्त्तव्याऽऽसीत्सायणाचार्येण। 'कः करत्करति०' इत्यत्र व्यत्ययेन

शपम्मन्वानयोरनयोर्न पतिता स्याद्दृष्टिर्भ्वादिस्थे कृवि । किमपि स्यात्तयोर्वचनं नास्ति स्वीकारार्हम् ।

न च लोकेऽप्रसिद्धत्वाच्छब्वतां कृन्प्रयोगाणां भ्वादिगणेऽनवस्थितेऽप्यस्मिन्धातौ तादृशवैदिक-प्रयोगाणां साधनं व्यत्ययबलेन सेत्स्यतीति वाच्यम्, अगतिकगतित्वाद् विशिष्टतत्त्वावाप्तिविषयत्वादेव वा व्यत्ययाश्रयणस्य । व्यत्ययबलाश्रयणे यद्येतावानुत्साहस्तर्हि सर्वमपि वैदिकप्रयोगसाधकं सूत्रजातमष्टाध्याय्या अपि बहिर्निस्सार्यतां व्यत्ययमेव च समाश्रित्य प्रबलत्वम्प्राप्यताम् । तेनैव सर्वेष्टसिद्धेः । वस्तुतो भ्वादिषु सतः कृन्वस्ततो बहिष्कृतवतः सायणस्याऽऽयासवृद्धिरेवाजायत । अतएव स वेदभाष्ये नानास्थलेषु 'व्यत्ययेन शबत्र' इत्यादिवचनं घोषयितुम्बाधितो बभूव । निष्कण्टकं पन्थानम्परित्यज्य शल्योद्धरणायासबहुलेऽध्वनि स पदन्निदधे ।

किञ्च व्याकरणस्य प्रयोजनं लौकिकानामिव+ वैदिकानामपि शब्दानामनुशासनं विद्यत इति स्पष्टम्प्रोचे पस्पशायाम्पतञ्जलिः । अधिकञ्चैतदत्र यद् व्याकरणस्य मुख्यप्रयोजनवत्ता तु वेदानां संरक्षणे ह्येवावसीयते न तु लोकप्रसिद्धशब्दमात्रसाधुत्वसम्पादने । तथा च पस्पशामुखे प्रावाचयद् भाष्यकारः—'रक्षार्थं वेदानामध्येयं व्याकरणमिति । यदि च लोकप्रसिद्धत्वाप्रसिद्धत्वमेव कस्यचिद्धातोः कस्मिंश्चिद्गणेऽवस्थानस्य हेतुर्मन्येत तर्हि तु बहवस्सन्ति धातवो भ्वादौ येषाम्प्रयोगा लोके सर्वथैवाप्रसिद्धाः । कुतो न तर्हि तेऽपि हेतोरस्मादेव ततो बहिष्क्रियन्ते ?

किञ्च विकरणद्वयप्रसङ्गवतः कृवो धातोरिवान्यस्याप्यैकस्य तादृशस्य धातोश्चर्चाऽत्र प्रस्तूयते । 'श्रु श्रवणे' धातुर्भ्वादिगणेऽस्ति, पुरा चासीदिति सर्वसम्मतमिदम् । तस्यापि द्विविधानि रूपाणि भवन्ति । श्नुविकरणवन्ति शृणोति, शृणुतः, शृण्वन्ति प्रभृतीनि; शब्विकरणवन्ति श्रवति, श्रवतः, श्रवन्ति इत्यादीनि च । शृणोत्यादीनां साधनाय पाणिनिना 'श्रुवः शृ च' (अ० ३-१.७४) इति सूत्रन्निरमायि: श्रवति, श्रवतः प्रभृतीनाञ्च सिद्धये श्रुधातोर्भ्वादिगणे 'श्रु श्रवणे' (भ्वा.६७६), इत्यत्र समावेशोऽकारि । कृन्धातोरिव श्रुधातोरपि शब्वन्ति रूपाणि तु लोके सर्वथैव न सन्ति प्रसिद्धानि । वेदे चापि श्रुधातोः शब्वन्तः प्रयोगाश्चतुःपञ्चा एव समुपलभ्यन्ते । यदा पञ्चानामेव प्रयोगाणां सिद्धये श्रुधातोर्भ्वादौ स्थितिर्मृष्यते तर्हि शतमितशब्वत्प्रयोगवतः कृवोऽवस्थितिर्भ्वादौ कथन्न न्याय्या ? नापि सायणाचार्यो नतरान्तस्य श्रद्धेयौ न्यासकृत्पदमञ्जरीकारौ किमपि प्रोचुरत्र ।

सर्वेऽत्र मौनमभजन्त। प्रत्युत सायणाचार्यो वेदभाष्ये श्रुधातोः शब्वति प्रयोगे शब्विकरणमौत्सर्गिकमेव मेने नतु व्यत्ययकृतम्—'यदश्रवन् पृशव उद्यमानम्' ( ऋ. ७.६८.१ ) अश्रवन् अश्रृण्वन्। श्रृणोतेर्लङि सामान्यविहितः शबेव छन्दोविषयत्वात् स्थितः'।

यथा केषाञ्चिदेव शब्वतां श्रुधातुघटितवैदिकप्रयोगाणामनुशासनाय पाणिनिराचार्यः श्रुधातवे भ्वादौ स्थानन्ददौ तथैव सुबहूनां शब्वतां कृञ्धातुनिष्पन्नवैदिकशब्दानामनुशासनायाऽवश्यमेव कृञ्धातुम्भ्वादिगणे पपाठ।

न च "यद्ययं [ कृञ्धातुर्भ्वादौ ] स्यात्, अकरदित्येवमर्थं 'कृमृदृरुहिभ्यश्छन्दसि' इति करोतेरङ्विधानमनर्थकं स्याद्, अस्माल्लङि शपि अस्य रूपस्य सिद्धेः। 'छन्दसि लुङ्लङ्लिटः' इति लुङादीनामेकत्र विधानात् नास्त्यर्थभेदः ( मा. धा. वृ. २३५ सायणवचनम् )" इति वाच्यम्, आपाततोऽर्थभेदाऽभावदर्शनेऽपि स्वरभेदसम्भवात्, स्वरभेदे सति सूक्ष्मार्थभेदस्यापि सुसम्भवात्, 'छन्दसि लुङ्लङ्लिटः' इत्यत्रान्यतरस्यामित्यस्यानुवर्त्तनाच्च।

यद्यपि 'अकरत्' इत्यादिषु शपि विकरणे कृतेऽङि वा कृते सति समाना रूपनिष्पत्तिः स्वरयोजना चातिङः परत्वे सर्वनिघातत्वात् समाना, तिङः परत्वे पादादित्वे यदादिवृत्तत्वे वाऽडागमस्योदात्तत्वादपि स्वरः समानः। परं यत्राडागमो नास्ति सर्वनिघातता चापि निषिध्यते तत्राङि शपि च स्वरभेदो भवति। यथा–'मा हि करत्'। इत्यत्राऽप्रातिलोम्यविषये हिनिपातयुक्तमाङः प्रयोगेऽडागमोनास्ति 'हि च' ( अ० ८.१.३४ ) इतिसूत्रेण सर्वनिघातत्वं च निषिध्यते। अस्यामवस्थायां 'करत्' पदे यदि शप् कल्प्येत तर्हि तस्य पित्त्वादनुदात्तत्वे परिशिष्टे धातुस्वरे धात्वन्तोदात्तत्वे सति 'करत्' इत्याद्युदात्तता पदस्य; अङि कल्पिते सति तु सतिशिष्टन्यायेन प्रत्ययस्वरबलेन स्थानिनश्च्लेश्चित्त्वबलेन वा 'करत्' इत्यन्तोदात्तता पदस्य भवेत्। तदेवं कृञो भ्वादौ पाठे सत्यपि, अन्तोदात्तस्य 'करत्' इत्यादिपदस्य साधनाय 'कृमृदृरुहि०' इत्यङ्विधानं सार्थकमेव नानर्थकं खलु। स्वरभेदे सति सूक्ष्मोऽर्थभेदोऽपि भवतीति स्वरशास्त्रस्वारस्यविदां मतम्।

किञ्च 'छन्दसि लुङ्लङ्लिटः' इत्यत्र 'समुच्चयेऽन्यतरस्याम्' इति सूत्रादन्यतरस्याम्पदमनुवर्त्तते। अतः पक्षे वेदेऽपि लुङ्लङ्लिटो लकाराः स्वस्वनिर्दिष्टेऽर्थेऽपि भवन्ति। तदा लङ्लकारीयशब्वतः 'करत्' पदस्यानद्यतनभूतकालविषयकोऽर्थः, लुङ्लकारीयअङ्वतः 'करत्' इति पदस्य च सामान्यभूतकालविषयकोऽर्थः। एवञ्चार्थभेदोऽपि स्पष्टः।

किञ्च सायणाचार्य एव कृञम्भ्वादेः प्रच्यावनाय विसाहसञ्चक्रे नान्यः कश्चित्प्राचीनवैयाकरणः। अत एव क्षीरतरङ्गिण्यामद्यावधि भ्वादिषु 'कृञ् करणे' धातुः सव्याख्यानमुपलभ्यते।

किञ्चापरमिदं सत्यं साक्षात्कुर्वन्तु सन्तः। शपथशतेनापि सत्यमपलपितुन्न शक्यते। सायणः कामं कटिमाबद्ध्य कृञं वराकं तस्य वासभवनाद् भ्वादेर्निराचकार स्वनिष्कासनकर्मपुष्ट्यै च नैकत्र वेदभाष्ये शब्वत्सु कृञ्प्रयोगस्थलेषु 'व्यत्ययेनात्र शबिति सञ्जुघोषापि। परं शालिनः कृञो भ्वादौ तादृशो दृढः प्राचीनतमः सुप्रसिद्धश्च वासाधिकारो यत्प्रतिषेद्धा सायणोऽपि सत्यमेतदन्तत उररीचकारैव। स चापि सकृदेव नहि द्विरेव नैवापि तु त्रिः तस्य भ्वादिगणीयत्वं वर्णयामास। यथा—

(क) 'करतां नः सुराधसः' (ऋ. १.२३-६) अत्र सायणभाष्यम्—"करतां कुरुताम्। 'कृञ् करणे' भौवादिकः। लोटस्तस्। तसस्ताम्। कर्तरि शप्। गुणो रपरत्वम्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः क्रियते।"

(ख) 'शृतं यदा करसि जातवेदः' (अथ. १८.२.४) अत्र सायणभाष्यम्—"करसि करोषि करोतेः औत्सर्गिकः शप्। लेटि वा अडागमः।"

(ग) 'करतां नः सुराधसः' (साम. उत्त. मं. सं. १४५) अत्र सायणभाष्यम्—"करतां कुरुताम्। डुकृञ् करणे उभ० भौवादिकः। लोटस्तस्। तसस्ताम्। ।"

एवमभियोक्ताऽपि प्रकोष्ठवासिनो वासाधिकारं त्रिः स्वीचकार तदा तस्याभियोगः कथन्न निरस्तीक्रियेत। एवं निराकर्त्तुर्युक्तीनां निराकरणात्प्रमाणान्तरैः साक्ष्यन्तरेण च सुप्रमाणितत्वात्स्वयं सायणस्यापि त्रिः स्वीकृतेर्दर्शनाद् अस्माभिः कृञ् धातुः सबहुमानं पुनर्भ्वादौ प्रावेश्यत।

परमार्थतश्च 'श्रु श्रवणे', 'श्रुवः शृ च' इति सूत्रद्वय्या रचनाप्रकाशे 'डुकृञ् करणे', 'तनादिकृञ्भ्य उः' इति सूत्रयुगल्या निर्माणस्याध्ययनं क्रियेत तर्हि 'डुकृञ् करणे' इति धातुसूत्रस्यौचित्यं भ्वादावेव पाठेऽवतिष्ठते न तु तनादौ। तदैव 'तनादिकृञ्भ्य उः' इत्यत्र कृञ्ग्रहणस्य सुन्याय्यता प्रतिपादयितुं शक्या। परं भाष्यकृतः कालात्प्रागेव तस्य प्रवेशस्तनादौ केनचिदकारीति तत्रापि तस्य पाठो मृष्यते।

(iii) रौधादिकः 'कृती' वेष्टनार्थकः ।

धातुपाठे गणद्वये 'कृती' धातुः पठ्यते । तुदादिगणे रुधादिगणे च । तुदादिषु स छेदनार्थकः 'कृतीँ छेदने' ( तु. १४३ ) इति, रुधादिषु तु 'कृतीँ वेष्टने' ( रु. १० ) इति वेष्टनार्थको द्रष्टव्यः । केषुचिद् धातुपाठपुस्तकेषु रुधादावपि स छेदनार्थकः पठितो दृश्यते । तथा तस्य वितथः पाठः । अस्माभिस्तु रुधादौ वेष्टनमेव तस्यार्थः प्रादीयत । रौधादिकस्य वेष्टनार्थत्वेऽधोविन्यस्तानि प्रमाणानि द्रष्टव्यानि—

(क) 'या अकृन्तन्नवयन्' ( अथ. १४.१.४५ ) अत्र श्नम्विकरणीयमकृन्तन्पदं वेष्टनार्थकमेव ।

(ख) 'ग्नास्त्वाकृन्तन्नपसोऽतन्वत धियोऽवयन्' (मै. सं. १.९.४) अत्रापि 'अकृन्तन्' इति रौधादिककृतीप्रयोगेवेष्टनमेवार्थः सङ्गच्छते ।

(ग) 'या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबः' ( तैसं.२.५.१.७ ) अत्र रौधादिक-कृतीप्रयोगः 'कृणत्ति' तौदादिककृतीरूपात् 'निकृन्तते' इत्यस्माद् भिन्नार्थक एव ।

(घ) 'सेऽसिचि कृतचृत०' इतिसूत्रवृत्तिव्याख्यायां विवरणपञ्जिकाकारः सस्मार—'कृती छेदने' इति तौदादिकः। 'कृती वेष्टने' इति रौधादिकः ।

(ङ) धातुवृत्ति-क्षीरतरङ्गिणीसिद्धान्तकौमुदीप्रभृतिष्वपि रौधादिकस्य वेष्टनमेवार्थः पठ्यते ।

(च) निरुक्तसम्मर्शे (पृ० १८४) स्वामी ब्रह्ममुनिरपि 'कृन्तन्' पदं वेष्टितवत्य इति व्याचख्यौ ।

(छ) वैदिकपदानुक्रमकोषकृतोऽपि सर्वत्र कृतीधातुं यथायथं छेदनार्थकं वेष्टनार्थकं च स्वीचक्रिरे ( वेदाङ्गभागे २यखण्डे ९१८ पृष्ठे ) ।

(ज) वामनशिवराम आप्टे-सङ्गृहीत-संस्कृताङ्ग्लभाषाकोषे (पृ० 598) ऽपिरौधादिक कृती-धातोः To spin, to surround, encompass इत्येव मर्थाः सञ्जगृहिरे ।

गणपाठे

नानागणपाठपुस्तकेषु गणशब्देषु महान् व्यत्यासोऽवलोक्यते । तत्र किं हेयं किञ्चोपादेयमित्यत्र महत्काठिन्यमापतति । यथामति सङ्ग्रहोऽत्र नानास्रोतभ्यः संशोध्याक्रियत । केषुचिदजमेरीयादिसंस्करणेषु बहवो गणाः परित्यक्ता एवावलोक्यन्ते । अत्र तु सर्वेषामेव सूत्रगणानां समावेशे प्रयत्नमकुर्म । तथैव परिशिष्टभागे सर्वे एव वार्त्तिकगणा अपि समगृह्यन्त ।

## ५. पाणिनीयशिक्षा-सूत्रपाठः ।

व्याकरणमिव शिक्षाऽपि वेदाङ्गम् । व्याकरणाध्ययनात् प्राक् शिक्षाया अध्ययनन्नितान्तमेवाऽऽवश्यकम् । अतः पाणिनिप्रोक्त-शिक्षासूत्राणामपि सङ्ग्रहोऽत्रान्ते व्यधीयत । एतेषां शिक्षासूत्राणाञ्च चयनं वयं श्री पं०युधिष्ठिर-मीमांसकमहाभागैः प्रकाशितचरात् 'शिक्षासूत्राणि' इत्याख्यात् सूत्रसङ्ग्रहाद् व्यदध्म । शिक्षाया ज्ञानं कारयित्वैव शिष्या व्याकरणमध्याप्याः ।

## ६. परिशिष्टभागः

परिशिष्टभागे प्रथमं वार्त्तिकगणाः प्राकाश्यन्त । सूत्रगणवत्तेषामप्यु-पादेयता प्रसिद्धैव । ततः पाणिनीयव्याकरणप्रसिद्धाः सर्वाः परिभाषा अददामहि । इमाः परिभाषा वयम्पुरुषोत्तमदेवस्य परिभाषावृत्तेः समगृह्णीमहि । परिभाषाणां स्मरणात्परिज्ञानात्प्रयोगाच्च शब्दशास्त्रं सुप्रकाशितम्भवतीति तासां सङ्ग्रहोऽपि महदुपकारी संवत्स्यति । उदात्तादिस्वरज्ञानाय शान्तनवा-चार्यप्रणीतानि फिट्सूत्राण्यपि साहाय्यकन्ति सन्तीति तान्यपि तदनन्तर-मदीयन्त । वैयाकरणः पाणिनीयं प्रत्ययप्रकरणं स्वरप्रकरणञ्च सम्यङ् निपीय यदि फिट्सूत्रेष्वपि भणिती जायते तर्हि स स्वरज्ञाने स्वरसञ्चारे तद्बलेन च वेदार्थनिश्चयेऽपि कृती सम्पद्यते ।

## ७. धातुवर्णानुक्रमणिका

सर्वान्ते धातुवर्णानुक्रमणिकायां सर्वे धातवो वर्णानुक्रमेण प्रादीयन्त । तत्र चापि यथायथमनुनासिकचिह्नानि तथैवानुदात्तादिस्वरचिह्नानि चापि समाङ्-क्यन्त । तेन वर्णानुक्रमणिकादर्शनमात्रेणापि धातोः परस्मैपदित्वात्मनेप-दित्वोभयपदित्वानाम्, अनिट्त्वसेट्त्वयोश्च बोधो भविष्यति । एवञ्चाय-म्परिशिष्टभागोऽपि पाठकानां व्याकरणज्ञानं विशदयिष्यतीति विन्महे ।

## ८. स्थूलाक्षरप्रयोगः

धातुपाठपर्यन्ते समस्तग्रन्थे शिक्षासूत्रेषु च मुद्रणाय स्थूलाक्षराण्येव प्रायुञ्ज्म । अनेन घोषणपराणामल्पपठितबालानां क्षीणदृष्टीनां वृद्धानाञ्च पठनकर्मणि सौकर्यं सम्पत्स्यते । कर्गलमुद्रणादिव्ययवृद्धिभयाद् गणपाठमुद्रणे न तादृशानि स्थूलाक्षराणि प्रयोक्तुम शक्नुम ।

एवमिदञ्चिरायाभिलषितं संस्करणम्प्रकाश्य संस्कृतानुरागिणां सज्ज-नानाम्पाणिपद्मेषु समुपहरन् प्रसीदामि । कृतज्ञताप्रकाशनावसरे सर्वप्रथमं

सर्वसाफल्यप्रदातारमखिलविघ्नव्रातविहन्तारं परमतत्त्वम्परमात्मानं मनसि निध्याय सर्वसाफल्यञ्च तस्मै समर्प्यादौ स्वव्याकरणाध्यापकेषु कर्णाटकवासिनं पं० विश्वामित्रमहाभागं, विहारप्रदेशीयं श्री पं० शोभितमिश्रमहोदयं, चित्तौड़गढगुरुकुलाचार्यपदमधिष्ठितचरं श्री पं० भीमसेनवेदवागीशमहाभागं च श्रद्धया स्मरामि। स्वाशीराशिभिस्सदा मां समेधयितॄन् सरस्वतीसमुपासनमात्रैकव्रतान् नानाग्रन्थरत्नरचयितॄन् पं० श्री युधिष्ठिरमीमांसक-पादानपि सप्रश्रयमत्र नौमि। स्वामिनं श्री धर्मानन्द-सरस्वतीमहाभागमर्बुदपर्वतीयमपि सहायकम्मन्वानः स्मरामि।

काशी-आर्यसमाजाधिकारिणां विशेषतः प्रधानपदभाजः श्रीकैलाशनाथसिंह महोदयस्य श्रीदेवराजार्यमहाभागस्य च मन्त्रिणः कृतज्ञोऽस्मि याभ्यां सार्धमासद्वयमितकालं यावन्मह्यमार्यसमाजमन्दिरे वासादिसौविध्यम्प्रेम्णा प्रादायि।

ज्योतिषप्रकाशमुद्रणालयाधिपतिपदमलङ्कुर्वते शान्तशीलिने श्री नारायणम्हसकरमहोदयाय सुपणचणाय प्रबन्धकश्रीकाशीनाथशर्ममहाभागाय च धन्यवादान् वितीर्य मुद्रणालयकार्यकर्तृभ्यः सर्वश्री मुकुन्ददादा-श्रीशिवनाथ–श्री अमरनाथ–श्रीशङ्करगुप्त–श्रीननकूनेता-श्री राजनाथ प्रभृतिभ्योऽपि साधुवादान् प्रददे।

ग्रन्थप्रकाशनस्य प्रथमप्रक्रमत्वादस्मिन् संस्करणे मम स्वल्पश्रुतत्वादनवधानाद् दृग्वैकल्यान्मुद्रणादिदोषाच्च नैकत्र स्खलितानि स्थानमलभन्त। तेषु बहूनाम्परिहारायात्राऽशुद्धिसंशोधनपत्रन्दीयते। शिष्टा अशुद्धीः शिष्टाः स्वधिया शोधयिष्यन्तीत्याशासे। एवञ्च भविष्यति सर्वमेवेष्टं सिद्धम्।

वि० २०४३ फा० शु० एकादश्याम्

विद्वज्जनचरणरजोजुट्
सत्यानन्दवेदवागीशः

# पाणिनीय-शब्दानुशासने अशुद्धि-संशोधनम्



| पृष्ठम् | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १ | २ | १८ | -वतू | -वतूँ |
| २ | २ | ४ | ऽ ाच | ऽचि |
| ३ | १ | १० | सिच् | सिँच् |
| ,, | ,, | १४ | सेट | सेट् |
| ,, | ,, | २२ | बश्चि- | वश्चि- |
| ,, | २ | ११ | -व्रह्म- | -ब्रह्म- |
| ४ | १ | १६ | बिशा- | विशा- |
| ५ | २ | ८ | बिप्र- | विप्र- |
| ६ | १ | २३ | -त्तब- | -त्तव- |
| ९ | १ | ३ | -बिधि | -विधिः |
| ,, | ,, | १३ | याब- | याव- |
| ११ | २ | २ | -बिशे- | -विशे- |
| १२ | १ | २६ | दरा- | दूरा- |
| १४ | २ | ८ | -ञ्य- | -ञ्यँ- |
| १६ | १ | १० | कण्डूबा- | कण्डूवा- |
| ,, | ,, | ११ | -बिच्छि- | -विच्छि- |
| १७ | १ | ६ | साव- | सार्वं- |
| ,, | ,, | २१ | क्रया- | क्र्या- |
| ,, | २ | १६ | -तुष- | -त्तुप- |
| १८ | २ | २६ | ण्युट | ण्युट् |
| २० | १ | ५ | भृत- | भृतृ- |
| २१ | १ | ८ | चे | चेः |
| २२ | १ | १३ | -देबि- | -देवि- |
| ,, | २ | १६ | घुरच | घुरच् |
| ,, | ,, | १७ | कुरच | कुरच् |
| ,, | ,, | १८ | क्वरप | क्वरप् |
| २३ | १ | ४ | शव- | शृव- |
| ,, | ,, | ९ | क्विँप | क्विँप् |
| २४ | १ | १७ | इनुँण | इनुँण् |
| ,, | २ | ४ | -रप | -रप् |
| ,, | ,, | १० | -विपु | -विषु |

| पृष्ठम् | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २५ | २ | ८ | बिभा- | विभा- |
| ,, | ,, | २३ | -याद्या- | -योद्या- |
| २६ | १ | ४ | युच | युच् |
| ,, | ,, | २२ | लड- | लँड- |
| ,, | २ | ६ | लृड- | लृँड- |
| २६ | २ | ७ | -लिँङ् | -लिँ ङ् |
| ,, | ,, | १३ | ,, | ,, |
| ,, | ,, | १४ | -थँपु | -थँपु |
| २९ | २ | ८ | -पूदा- | -घूदा- |
| ३० | २ | २ | -ाचत- | -चित- |
| ४९ | १ | २१ | -ली साः | -लीमसाः |
| ,, | २ | १८ | मतु- | मतुँ- |
| ५२ | १ | १६ | -दाकक् | -ढौकक् |
| ५४ | २ | २० | -याः | -योः |
| ६१ | १ | १४ | -तवे | -तँवे |
| ,, | ,, | १६ | -याः | -योः |
| ६७ | १ | ९ | -तुड- | -तुँड- |
| ७७ | २ | ९ | -सवा- | -सर्वा- |
| ७८ | १ | १५ | -तुँ- | -तुँ- |
| ९२ | १ | ११ | -वुं- | -वुँ- |
| ९३ | १ | २१ | -ह्विच | -ह्विश्च |
| ,, | २ | १ | -बुँक् | -बुँक् |
| ९४ | १ | १८ | कुश्च | कुँश्च |
| ९५ | १ | १३ | -नलो- | -नँलो- |
| ९७ | २ | १२ | -पृब- | -पृव- |
| ९९ | २ | १० | शृ- | शृ- |
| १०७ | २ | ४ | -रन् | -रँन् |
| ११५ | १ | ८ | याश्चो- | याच्ञो- |
| ,, | २ | १ | स्वदँ | स्वदुँ |
| ११७ | १ | ४ | भ्राघृँ | भ्राघृँ |

| पृष्ठम् | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ११८ | १ | ४ | आजृँ | आजुँ |
| ,, | ,, | ९ | शोक | शोके |
| ,, | ,, | १४ | –नयो | –नयोः |
| १२० | १ | १४ | दीप्तो | दीप्तौ |
| ,, | ,, | २२ | भडिँ | मडिँ |
| १२१ | २ | १२ | जभीँ | जभीँ |
| १२५ | १ | २२ | वषँ | वषँ |
| ,, | ,, | २४ | णेषृँ | णेषुँ |
| १२९ | १ | १ | जनी– | जनीँ– |
| १२९ | १ | १ | क्नसु– | क्नसुँ– |
| ,, | ,, | ,, | रञ्जो– | रञ्जो– |
| ,, | ,, | ३ | ज्वल– | ज्वलँ– |
| ,, | ,, | ,, | –ह्वल– | ह्वलँ– |
| ,, | ,, | ,, | –ह्मल– | –ह्मलँ– |
| ,, | ,, | ,, | –नमा– | –नमः– |
| १२९ | १ | ५ | ग्लास्ना– | ग्लास्ना– |
| ,, | ,, | ९ | स्खदि– | स्खदिँ– |
| १३१ | २ | ३ | षै | षै |
| १३२ | २ | ११ | तृ | तॄ |
| १३५ | १ | ९ | ष्टल् | ष्टुल् |
| १३६ | १ | १८ | ४६ | ४ प६ |
| १४१ | २ | १७ | चिरि | चिरि |
| ,, | ,, | ,, | जिरि | जिरि |
| १४२ | २ | १४ | तुम्फ | तुम्फँ |

| पृष्ठम् | स्तम्भः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ५ | – | ३ | तदथ | तदर्थ |
| १३ | १ | ११ | अर्चिँ | अर्चिं |
| ,, | ,, | १२ | अचुँ | अचुं |
| ,, | ३ | ७ | आप्लृँ | आप्लृं |
| ,, | ,, | १७ | [ जि ] | [ जि ] |
| १५ | १ | १ | कमुँ | कमुं |
| १६ | २ | २ | क्लिदिँ | क्लिदिँ |
| ,, | ,, | ३२ | क्षु– | क्षु– |
| ,, | २ | ३३ | क्षधँ | क्षुधं |
| ,, | ३ | १३ | क्ष्वेलृँ | क्ष्वेलृं |
| १७ | १ | १७ | खै | खै |
| ,, | ,, | २० | खोलृँ | खोलृं |
| १८ | १ | २० | ग्लै | ग्लै |
| १८ | ३ | ३२ | चिरिँ | चिरि |
| १९ | २ | १६ | छुपँ | छुपं |
| ,, | ३ | १५ | जिरिँ | जिरि |
| २३ | २ | २२ | भ्र | भ्रु |
| २४ | ३ | १५ | पुड | पुड |
| २५ | २ | २४ | धिंर् | धिंर् |
| २६ | १ | २४ | अंसुँ | अंसुं |
| ,, | ,, | २९ | अंशुँ | अंशुं |
| ३१ | १ | १४ | वृक्षँ | वृक्षं |
| ,, | ,, | १७ | वृजीँ | वृजीं |
| ,, | २ | ३ | वेथृँ | वेथृं |
| ,, | ,, | ६ | [ डु ] | [ डु ] |
| ३२ | २ | १५ | शृधुँ | शृधुं |

—:*:—

ओ३म्

# पाणिनीय-शब्दानुशासनम्

तत्र

## अष्टाध्यायीसूत्रपाठः

अथ शब्दानुशासनम् ।

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लँण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥

## प्रथमोऽध्यायः

### प्रथमः पादः

१ वृद्धिरादैच् ।
२ अदेङ्गुणः ।
३ इको गुणवृद्धी ।
४ न धातुलोप आर्धधातुके ।
५ क्ङिति च ।
६ दीधीवेवीटाम् ।
७ हलोऽनन्तराः संयोगः ।
८ मुखनासिकावचनोऽनुनासिकः ।
९ तुल्यास्यप्रयत्नं सवर्णम् ।
१० नाज्झलौ ।
११ ईदूदेद् द्विवचनं प्रगृह्यम् ।
१२ अदसो मात् ।
१३ शे ।
१४ निपात एकाजनाङ् ।
१५ ओत् ।
१६ सम्बुद्धौ शाकल्यस्येतावनार्षे ।
१७ उञ ऊँ ।
१८ ईदूतौ च सप्तम्यर्थे ।
१९ दाधाघ्वदाप् ।
२० आद्यन्तवदेकस्मिन् ।
२१ तरप्तमपौ घः ।
२२ बहुगणवतुडति सङ्ख्या ।
२३ ष्णान्ता षट् ।
२४ डति च ।
२५ क्तक्तवतू निष्ठा ।
२६ सर्वादीनि सर्वनामानि ।
२७ विभाषा दिक्समासे बहुव्रीहौ ।
२८ न बहुव्रीहौ ।
२९ तृतीयासमासे ।
३० द्वन्द्वे च ।
३१ विभाषा जसि ।
३२ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।

३३ पूर्वपरावरदक्षिणोत्तरापराध-
राणि व्यवस्थायामसञ्ज्ञायाम् ।
३४ स्वमज्ञातिधनाख्यायाम् ।
३५ अन्तरं बहिर्योगोपसंव्यानयोः ।
३६ स्वरादिनिपातमव्ययम् ।
३७ तद्धितश्चासर्वविभक्तिः ।
३८ कृन्मेजन्तः ।
३९ क्त्वातोसुन्कसुनः ।
४० अव्ययीभावश्च ।
४१ शि सर्वनामस्थानम् ।
४२ सुडनपुंसकस्य ।
४३ न वेति विभाषा ।
४४ इग्यणः सम्प्रसारणम् ।
४५ आद्यन्तौ टकितौ ।
४६ मिदचोऽन्त्यात्परः ।
४७ एच इग्घ्रस्वादेशे ।
४८ षष्ठी स्थानेयोगा ।
४९ स्थानेऽन्तरतमः ।
५० उरण्रपरः ।
५१ अलोऽन्त्यस्य ।
५२ ङिच्च ।
५३ आदेः परस्य ।
५४ अनेकाल्शित् सर्वस्य ।
५५ स्थानिवदादेशोऽनल्विधौ ।
५६ अचः परस्मिन्पूर्वविधौ ।
५७ न पदान्तद्विर्वचनवरेयलोप-
स्वरसवर्णानुस्वारदीर्घजश्च-
विधिषु ।
५८ द्विर्वचनेऽचि ।
५९ अदर्शनं लोपः ।
६० प्रत्ययस्य लुक्श्लुलुपः ।
६१ प्रत्ययलोपे प्रत्ययलक्षणम्
६२ न लुमताङ्गस्य ।
६३ अचोऽन्त्यादि टि ।
६४ अलोऽन्त्यात्पूर्व उपधा ।
६५ तस्मिन्निति निर्दिष्टे पूर्वस्य
६६ तस्मादित्युत्तरस्य ।
६७ स्वं रूपं शब्दस्याशब्दसञ्ज्ञा
६८ अणुदित् सवर्णस्य चाप्रत्ययः
६९ तपरस्तत्कालस्य ।
७० आदिरन्त्येन सहेता ।
७१ येन विधिस्तदन्तस्य ।
७२ वृद्धिर्यस्याचामादिस्तद्वृद्धम्
७३ त्यदादीनि च ।
७४ एङ् प्राचां देशे ।

द्वितीयः पादः

१ गाङ्कुटादिभ्योऽञ्णिन्ङित्
२ विज इट् ।
३ विभाषोर्णोः ।
४ सार्वधातुकमपित् ।
५ असंयोगाल्लिट् कित् ।
६ इन्धिभवतिभ्यां च ।

७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।
८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।
९ इको झल् ।
१० हलन्ताच्च ।
११ लिङ्सिचावात्मनेपदेषु ।
१२ उश्च ।
१३ वा गमः ।
१४ हनः सिच् ।
१५ यमो गन्धने ।
१६ विभाषोपयमने ।
१७ स्थाघ्वोरिच्च ।
१८ न क्त्वा सेट् ।
१९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।
२० मृषस्तितिक्षायाम् ।
२१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।
२२ पूङः क्त्वा च ।
२३ नोपधात् थफान्ताद्वा ।
२४ वञ्चिलुञ्च्यृतश्च ।
२५ तृषिमृषिकृशेः काश्यपस्य ।
२६ रलो व्युपधाद्धलादेः संश्च ।
२७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।
२८ अचश्च ।
२९ उच्चैरुदात्तः ।
३० नीचैरनुदात्तः ।
३१ समाहारः स्वरितः ।
३२ तस्यादित उदात्तमर्धह्रस्वम् ।
३३ एकश्रुति दूरात् सम्बुद्धौ ।
३४ यज्ञकर्मण्यजपन्यूङ्खसामसु ।
३५ उच्चैस्तरां वा वषट्कारः ।
३६ विभाषा छन्दसि ।
३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।
३८ देवब्रह्मणोरनुदात्तः ।
३९ स्वरितात् संहितायामनुदात्तानाम् ।
४० उदात्तस्वरितपरस्य सन्नतरः ।
४१ अपृक्त एकाल्प्रत्ययः ।
४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ।
४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ।
४४ एकविभक्ति चापूर्वनिपाते ।
४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।
४६ कृत्तद्धितसमासाश्च ।
४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ।
४८ गोस्त्रियोरुपसर्जनस्य ।
४९ लुक् तद्धितलुकि ।

५० इद् गोण्याः ।
५१ लुपि युक्तवद् व्यक्तिवचने ।
५२ विशेषणानां चाजातेः ।
५३ तदशिष्यं सञ्ज्ञाप्रमाणत्वात् ।
५४ लुब् योगाप्रख्यानात् ।
५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।
५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।
५७ कालोपसर्जने च तुल्यम् ।
५८ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ।
५९ अस्मदो द्वयोश्च ।
६० फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।
६१ छन्दसि पुनर्वस्वोरेकवचनम् ।
६२ विशाखयोश्च ।
६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।
६४ सरूपाणामेकशेष एकविभक्तौ ।
६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।
६६ स्त्री पुंवच्च ।
६७ पुमान् स्त्रिया ।
६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।
६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।
७० पिता मात्रा ।
७१ श्वशुरः श्वश्र्वा ।
७२ त्यदादीनि सर्वैर्नित्यम् ।
७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥

—०—

## तृतीयः पादः

१ भूवादयो धातवः ।
२ उपदेशेऽजनुनासिक इत् ।
३ हलन्त्यम् ।
४ न विभक्तौ तुस्माः ।
५ आदिर्ञिटुडवः ।
६ षः प्रत्ययस्य ।
७ चुटू ।
८ लशक्वतद्धिते ।
९ तस्य लोपः ।
१० यथासङ्ख्यमनुदेशः समानाम् ।
११ स्वरितेनाधिकारः ।
१२ अनुदात्तङित आत्मनेपदम् ।
१३ भावकर्मणोः ।
१४ कर्तरि कर्मव्यतिहारे ।
१५ न गतिहिंसार्थेभ्यः ।
१६ इतरेतरान्योऽन्योपपदाच्च ।
१७ नेर्विशः ।
१८ परिव्यवेभ्यः क्रियः ।
१९ विपराभ्यां जेः ।
२० आङो दोऽनास्यविहरणे ।
२१ क्रीडोऽनुसम्परिभ्यश्च ।

२२ समवप्रविभ्यः स्थः ।
२३ प्रकाशनस्थेयाख्ययोश्च ।
२४ उदोऽनूर्ध्वकर्मणि ।
२५ उपान्मन्त्रकरणे ।
२६ अकर्मकाच्च ।
२७ उद्विभ्यां तपः ।
२८ आङो यमहनः ।
२९ समो गम्यृच्छिभ्याम् ।
३० निसमुपविभ्यो ह्वः ।
३१ स्पर्धायामाङः ।
३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।
३३ अधेः प्रसहने ।
३४ वेः शब्दकर्मणः ।
३५ अकर्मकाच्च ।
३६ सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।
३७ कर्तृस्थे चाशरीरे कर्मणि ।
३८ वृत्तिसर्गतायनेषु क्रमः ।
३९ उपपराभ्याम् ।
४० आङ उद्गमने ।
४१ वेः पादविहरणे ।
४२ प्रोपाभ्यां समर्थाभ्याम् ।
४३ अनुपसर्गाद्वा ।
४४ अपह्नवे ज्ञः ।
४५ अकर्मकाच्च ।
४६ सम्प्रतिभ्यामनाध्याने ।
४७ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।
४८ व्यक्तवाचां समुच्चारणे ।
४९ अनोरकर्मकात् ।
५० विभाषा विप्रलापे ।
५१ अवाद् ग्रः ।
५२ समः प्रतिज्ञाने ।
५३ उदश्चरः सकर्मकात् ।
५४ समस्तृतीयायुक्तात् ।
५५ दाणश्च सा चेच्चतुर्थ्यर्थे ।
५६ उपाद् यमः स्वकरणे ।
५७ ज्ञाश्रुस्मृदृशां सनः ।
५८ नानोर्ज्ञः ।
५९ प्रत्याङ्भ्यां श्रुवः ।
६० शदेः शितः ।
६१ म्रियतेर्लुङ्लिङोश्च ।
६२ पूर्ववत्सनः ।
६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ।
६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ।
६५ समः क्ष्णुवः ।
६६ भुजोऽनवने ।
६७ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ।

६८ भीस्म्योर्हेतुभये ।
६९ गृधिवञ्च्योः प्रलम्भने ।
७० लियः सम्माननशालीनीकरणयोश्च ।
७१ मिथ्योपपदात् कृञोऽभ्यासे ।
७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले ।
७३ अपाद्वदः ।
७४ णिचश्च ।
७५ समुदाङ्भ्यो यमोऽग्रन्थे ।
७६ अनुपसर्गाज्ज्ञः ।
७७ विभाषोपपदेन प्रतीयमाने ।
७८ शेषात् कर्तरि परस्मैपदम् ।
७९ अनुपराभ्यां कृञः ।
८० अभिप्रत्यतिभ्यः क्षिपः ।
८१ प्राद्वहः ।
८२ परेर्मृषः ।
८३ व्याङ्परिभ्यो रमः ।
८४ उपाच्च ।
८५ विभाषाऽकर्मकात् ।
८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।
८७ निगरणचलनार्थेभ्यश्च ।
८८ अणावकर्मकाच्चित्तवत्कर्तृकात् ।
८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।
९० वा क्यषः ।
९१ द्युद्भ्यो लुँङि ।
९२ वृद्भ्यः स्यसनोः ।
९३ लुँटि च क्लृपः ।

—०—

चतुर्थः पादः

१ आ कडारादेका सञ्ज्ञा ।
२ विप्रतिषेधे परं कार्यम् ।
३ यू स्त्र्याख्यौ नदी ।
४ नेयङुवङ्स्थानावस्त्री ।
५ वामि ।
६ ङिति ह्रस्वश्च ।
७ शेषो घ्यसखि ।
८ पतिः समास एव ।
९ षष्ठीयुक्तश्छन्दसि वा ।
१० ह्रस्वं लघु ।
११ संयोगे गुरु ।
१२ दीर्घञ्च ।
१३ यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।
१४ सुप्तिङन्तं पदम् ।
१५ नः क्ये ।
१६ सिति च ।
१७ स्वादिष्वसर्वनामस्थाने ।
१८ यचि भम् ।
१९ तसौ मत्वर्थे ।

४० मकुरदर्दुरौ ।
४१ मद्गुरादयश्च ।
४२ असेरुरन् ।
४३ मसेश्च ।
४४ शावशेराप्तौ ।
४५ अविमह्योष्टिषच् ।
४६ अमेर्दीर्घश्च ।
४७ रुहेर्वृद्धिश्च ।
४८ तवेर्णिद्वा ।
४९ नञि व्यथेः ।
५० किलेर्बुक्च ।
५१ इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ।
५२ अशेर्नित् ।
५३ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ।
५४ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ।
५५ कमेः पश्च ।
५६ गुपादिभ्यः कित् ।
५७ मिथिलादयश्च ।
५८ पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ।
५९ कुम्बेर्नलोपश्च ।
६० शदेस्तश्च ।
६१ मूलेरादयः ।
६२ कबेरोतच्पश्च ।
६३ भातेर्डवतुप् ।
६४ कठिचकिभ्यामोरन् ।
६५ किशोरादयश्च ।
६६ कपिगडिगण्डिकटिपटिभ्य ओलच् ।
६७ मीनातेरूरन् ।
६८ स्यन्देः सम्प्रसारणञ्च ।
६९ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ।
७० वसेरगारे णिच्च ।
७१ पः किच्च ।
७२ अर्तेश्च तुः ।
७३ कमिमनिजनिगाभायाहिभ्यश्च
७४ चायः की ।
७५ आप्नोतेर्ह्रस्वश्च ।
७६ कृञः कतुः ।
७७ एधिवह्योश्चतुः ।
७८ जीवेरातुः ।
७९ आतृकन् वृद्धिश्च ।
८० कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् ।
८१ मृजेर्गुणश्च ।

८२ खडेर्डुँ ड् वा ।
८३ वहेर्धश्च ।
८४ कषेश्छश्च ।
८५ णित्कशिपद्यर्तेः ।
८६ अणो डश्च ।
८७ नञि लम्बेर्नलोपश्च ।
८८ के श्र एरँङ् चास्य ।
८९ त्रो दुँट् च ।
९० दरिद्रातेर्यालोपश्च ।
९१ नृतिशृध्योः कूः ।
९२ ऋतेरम् च ।
९३ अन्दूदृम्फूजम्बूकम्बूकफेलू-कर्कन्धूदिधिषूः ।
९४ मृग्रोरुतिँः ।
९५ ग्रो मुँट् च
९६ हृषेरुलच् ।
९७ हृसृरुहियुषिभ्य इतिँः
९८ ताडेर्णिलुक् च ।
९९ शमेर्ढः ।
१०० कमेरठः ।
१०१ रमेर्वृद्धिश्च ।
१०२ शमेः खः ।
१०३ कणेष्ठः ।
१०४ कलस्तृपश्च ।
१०५ शमेर्वश्च ।
१०६ वृषादिभ्यश्चित् ।
१०७ कमेर्बुँक् ।
१०८ लङ्घेर्वृद्धिश्च ।
१०९ कुटिकशिकौतिभ्यो मुँट् च ।
११० मृजेष्टिलोपश्च ।
१११ चुपेरच्चोपधायाः ।
११२ शकिशम्योर्नित् ।
११३ छो गुँग्घ्रस्वश्च ।
११४ अमन्ताड् डः ।
११५ क्वादिभ्यः कित् ।
११६ स्थाचतिमृजेरालज्वालञा-लीयरः ।
११७ पतिचण्डिभ्यामालञ् ।
११८ तमिविशिविडिमृणिकुलि-कपिपलिपञ्चिभ्यः कालन् ।
११९ पतेरङ्गच् पक्षिणि ।
१२० तरत्यादिभ्यश्च ।
१२१ विडादिभ्यः कित् ।
१२२ सृवृञोर्वृद्धिश्च ।
१२३ गन् गम्यद्योः ।
१२४ छापूखडिभ्यः कित् ।
१२५ भृजः किनुँट् च ।
१२६ शृणातेर्ह्रस्वश्च ।
१२७ गण् शकुनौ ।
१२८ मुदिग्रोर्गग्गौ ।
१२९ अण्डन् कृसृभृवृञः ।
१३० शदिभसोऽदिँः ।

१३१ दृणातेः पुँग्घ्रस्वश्च ।
१३२ त्यजितनियजिभ्यो डित् ।
१३३ एतेस्तुँट् च ।
१३४ सर्तेररटिँः ।
१३५ लङ्घेर्नलोपश्च ।
१३६ पारयतेरजिँः ।
१३७ प्रथेः कित्सम्प्रसारणञ्च ।
१३८ भियः षुँग्घ्रस्वश्च ।
१३९ युष्यसिभ्यां मदिँक् ।
१४० अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।
१४१ जहातेः सन्वदाकारलोपश्च ।
१४२ अवतेष्टिलोपश्च ।
१४३ ग्रसेरा च ।
१४४ अविसिविसिशुषिभ्यः कित्
१४५ इषियुधीन्धिदसिश्याधूसूभ्यो मक् ।
१४६ युजिरुचितिजां कुश्च ।
१४७ हन्तेर्हि च ।
१४८ भियः षुँग्वा ।
१४९ घर्मग्रीष्मौ च ।
१५० प्रथेः षिवन्षवन्ष्वनः सम्प्रसारणञ्च ।
१५१ अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ।
१५२ इण्शीभ्यां वन् ।
१५३ सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ।
१५४ शेवायह्वजिह्वाग्रीवाप्वामीवाः ।
१५५ कृगृशृदृभ्यो वः ।
१५६ कनिँन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ।
१५७ सप्यशूभ्यां तुँट् च ।
१५८ नञि जहातेः ।
१५९ श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ।

इति प्रथमः पादः ।

द्वितीयः पादः

१ कृहृभ्यामेणुः ।
२ हनिकुषिनीरमिकाशिभ्यः क्थन्
३ अवे भृञः ।
४ उषिकुषिगार्तिभ्यस्थन् ।
५ सर्तेर्णित् ।
६ जॄवृञ्भ्यामूथन् ।
७ पातॄतुदिवचिरिचिसिचिभ्यस्थक् ।
८ अर्तेर्निरि ।
९ निशीथगोपीथावगथाः ।

१० गश्चोदि ।
११ समीणः ।
१२ तिथपृष्ठगूथयूथप्रोथाः ।
१३ स्फायितञ्चिवञ्चिशकिक्षिपि-
क्षुदिसृपितृपिदृपिवन्द्युन्दि-
श्वितिवृत्यजिनीपदिमदिमुदि-
खिदिछिदिभिदिमन्दिचन्दि-
दहिदसिदम्भिवसिवाशिशीङ्-
हसिसिधिशुभिभ्यो रक् ।
१४ चकिरम्योरुच्चोपधायाः ।
१५ वौ कसेः ।
१६ अमितम्योर्दीर्घश्च ।
१७ निन्देर्नलोपश्च ।
१८ अर्देर्दीर्घश्च ।
१९ शुचेर्दश्च ।
२० दुरीणो लोपश्च ।
२१ कृतेश्छः क्रू च ।
२२ रोदेर्णिलुक् च ।
२३ बहुलमन्यत्रापि सञ्ज्ञा-
छन्दसोः ।
२४ जोरी च ।
२५ सुसूधाञ्गृधिभ्यः क्रन् ।
२६ शुसिचिमीनां दीर्घश्च ।
२७ वाविन्धेः ।
२८ वृधिवपिभ्यां रन् ।
२९ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुर-
खुरभद्रोग्रभेरभेलशुक्रशुक्ल-
गौरवन्नेरामालाः ।
३० समि कस उकन् ।
३१ पचिनशोर्णुकन्कनुमौ च ।
३२ भियः क्रुकन् ।
३३ क्वुन् शिल्पिसञ्ज्ञयोरपूर्व-
स्यापि ।
३४ रमेरश्च लो वा ।
३५ जहातेर्द्वे च ।
३६ ध्मो धम च ।
३७ हनो वध च ।
३८ बहुलमन्यत्रापि ।
३९ कृषेर्वृद्धिश्चोदीचाम् ।
४० उदकश्च ।
४१ वृश्चिकृषोः किकन् ।
४२ प्राङि पणिकषः ।
४३ मुषेर्दीर्घश्च ।
४४ स्यमेः सम्प्रसारणञ्च ।
४५ क्रिय इकन् ।
४६ आङि पणिपनिपतिखनिभ्यः
४७ श्यास्त्याहृञविभ्य इनच् ।
४८ वृजेः किच्च ।
४९ अजेरज च ।
५० बहुलमन्यत्रापि ।
५१ द्रुदक्षिभ्यामिनन् ।

५२ अर्तेः क्रिदिच्च ।
५३ वेपितुह्योर्ह्रस्वश्च ।
५४ तलिपुलिभ्यां च ।
५५ गर्वेरत उच्च ।
५६ रुहेश्च ।
५७ महेरिनण्च ।
५८ क्विँब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणश्च ।
५९ आप्नोतेर्ह्रस्वश्च ।
६० परौ व्रजेः षश्च पदान्ते ।
६१ हुवः श्लुवच्च ।
६२ स्रुवः कः ।
६३ चिँक् च ।
६४ तनोतेरनश्च वः ।
६५ ग्लानुदिभ्यां डौ ।
६६ च्विरव्ययम् ।
६७ रातेर्डैः ।
६८ गमेर्डोः ।
६९ भ्रमेश्च डूः ।
७० दमेर्डोसिँः ।
७१ पणेरिज्यादेश्च वः ।
७२ वशः कित् ।
७३ भृञ उच्च ।
७४ जसिसहोरुरिन् ।
७५ सुयुरुवृञो युच् ।
७६ अशे रश च ।
७७ उन्देर्नलोपश्च ।
७८ गमेर्गश्च ।
७९ बहुलमन्यत्रापि ।
८० रञ्जेः क्युन् ।
८१ भूसूधूभ्रस्जिभ्यश्छन्दसि ।
८२ कृपॄवृजिमन्दिनिधाञः क्युः ।
८३ धृषेर्धिष च सञ्ज्ञायाम् ।
८४ हन्तेर्घुर च ।
८५ वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।
८६ संश्चत्तृपद्वेहत् ।
८७ छन्दस्यसानच् शुजृभ्याम् ।
८८ ऋञ्जिवृधिमन्दिसहिभ्यः कित्
८९ अर्तेर्गुणः शुँट् च ।
९० सम्यानच् स्तुवः ।
९१ युधिबुधिदृशः किच्च ।
९२ हुर्छेः सनो लुक्छलोपश्च ।
९३ श्वितेर्दश्च ।
९४ शुचियुधिभ्यां सन्वच्च ।
९५ तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ ।
९६ बहुलमन्यत्रापि ।
९७ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।
९८ सावसेर्ऋन् ।
९९ यतेर्वृद्धिश्च ।

१०० नञि च नन्देः ।

१०१ दिवेर्ऋः ।

१०२ नयतेर्डिच्च ।

१०३ सव्ये स्थश्छन्दसि ।

१०४ अर्तिसृधृधम्यम्यश्यवितॄभ्यो ऽनिः ।

१०५ आङि शुषेः सनश्छन्दसि ।

१०६ कृपेरादेश्च धः ।

१०७ अदेर्मुँट् च ।

१०८ वृतेश्च ।

१०९ क्षिपेः किच्च ।

११० अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिँः ।

१११ बृंहेर्नलोपश्च ।

११२ द्युतेरिसिँन्नादेश्च जः ।

११३ वसौ रुचेः सञ्ज्ञायाम् ।

११४ भुवः कित् ।

११५ सहो धश्च ।

११६ पिबतेस्थुँक् ।

११७ जनेरुसिँः ।

११८ मनेर्धश्छन्दसि ।

११९ अर्तिपॄवपियजितनिधनितपिभ्यो नित् ।

१२० एतेर्णिच्च ।

१२१ चक्षेः शिच्च ।

१२२ मुहेः किच्च ।

१२३ कॄगॄशॄवॄञ्चतिभ्यः ष्वरच् ।

१२४ नौ षदेः ॥

इति द्वितीयः पादः

—*—

तृतीयः पादः

१ छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ।

२ इण्सिञ्जिदीङुष्यविभ्यो नक् ।

३ फेनमीनौ ।

४ कृषेर्वर्णे ।

५ बन्धेर्ब्रधिबुधी च ।

६ धापॄवस्यज्यतिभ्यो नः ।

७ लक्षेरट् मुँट् च ।

८ वनेरिच्चोपधायाः ।

९ सिवेष्टेर्यू च ।

१० कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित् ।

११ धेट इच्च ।

१२ तृषिशुषिरसिभ्यः कित् ।

१३ सुञो दीर्घश्च ।

१४ रमेस्त च ।

१५ रास्नासास्नास्थूणावीणाः ।

१६ गादाभ्यामिष्णुच् ।

१७ कृत्यशूभ्यां क्स्नः ।

१८ तिजेर्दीर्घश्च ।

१९ श्लिषेरच्चोपधायाः ।

२० यजिमनिशुन्धिदसिजनिभ्यो युच् ।
२१ भुजिमृङ्भ्यां युक्त्युकौ ।
२२ सरतेरयुः ।
२३ पानीविषिभ्यः पः ।
२४ च्युवः किच्च ।
२५ स्तुवो दीर्घश्च ।
२६ सुशृभ्यां निच्च ।
२७ कुयुभ्यां च ।
२८ खष्पशिल्पशष्पवाष्परूपपर्प-तल्पाः ।
२९ स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ।
३० कृहनिभ्यां क्नुः ।
३१ गमेः सन्वच्च ।
३२ दाभाभ्यां नुः ।
३३ वचेर्गश्च ।
३४ धेट इच्च ।
३५ सुवः कित् ।
३६ जहातेर्द्वेऽन्त्यलोपश्च ।
३७ स्थो णुः ।
३८ अजिवृरीभ्यो निच्च ।
३९ विषेः किच्च ।
४० कृदाधाराचिंकलिभ्यः कः ।
४१ सृवृभृशुषिमुषिभ्यः कक् ।
४२ शुकवल्कोल्काः ।
४३ इण्भीकापाशल्यतिमर्चिभ्यः कन्
४४ नौ हः ।
४५ नौ सदेर्डिच्च ।
४६ स्यमेरीट् च ।
४७ अजियुधुनीभ्यो दीर्घश्च ।
४८ ह्रियो रश्च लो वा ।
४९ शकेरुनोन्तोन्त्युनयः ।
५० भुवो झिच् ।
५१ कन्युच् क्षिपेश्च ।
५२ अनुङ् नदेश्च ।
५३ कृवृदारिभ्य उनन् ।
५४ त्रो रश्च लो वा ।
५५ क्षुधिपिशिमिथिभ्यः कित् ।
५६ फलेर्गुँक् च ।
५७ अशेर्लशश्च ।
५८ अर्जेर्णिलुक्च ।
५९ तृणाख्यायां चित् ।
६० अर्तेश्च ।
६१ अजियमिशीङ्भ्यश्च ।
६२ वृतुवदिवचिवसिहनिकमि-कषिभ्यः सः ।
६३ प्लुषेरच्चोपधायाः ।
६४ मनेर्दीर्घश्च ।
६५ अशेर्देवने ।
६६ स्नुव्रश्चिकृत्यृषिभ्यः कित् ।
६७ ऋषेर्जातौ ।

६८ उन्दिगुधिकुषिभ्यश्च ।
६९ गृधिपण्योर्दकौ च ।
७० अशेः सरन् ।
७१ वसेश्च ।
७२ सम्पूर्वाच्चित् ।
७३ कृधूमदिभ्यः कित् ।
७४ पतेरश्च लः ।
७५ तन्यृषिभ्यां क्सरन् ।
७६ पीयुक्वणिभ्यां कालन् ह्रस्वं सम्प्रसारणञ्च ।
७७ कठिकषिभ्यां काकुः ।
७८ सर्तेर्दुँक च ।
७९ वृतेर्वृद्धिश्च ।
८० पर्देर्नित सम्प्रसारणमलोपश्च ।
८१ सृयुवचिभ्योऽन्युजागूजक्नुचः
८२ आनकः शीङ्भियः ।
८३ आणको लूधूशिङ्घिधाञ्भ्यः ।
८४ उल्मुकदर्विहोमिनः ।
८५ ह्रियः कुक् रश्च लो वा ।
८६ हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् ।
८७ नञ्याप इट् च ।
८८ तनिमृङ्भ्यां किच्च ।
८९ अञ्जिघृसिभ्यः क्तः ।
९० दुतनिभ्यां दीर्घश्च ।
९१ जेर्मूट् चोदात्तः ।
९२ लोष्टपलितौ ।
९३ ह्रश्याभ्यामितन् ।
९४ रुहेरश्च लो वा ।
९५ पिशेः किच्च ।
९६ श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।
९७ दधिषाय्यः ।
९८ वृञ एण्यः ।
९९ स्तुवः केय्यश्छन्दसि ।
१०० राजेरन्यः ।
१०१ शृरम्योश्च ।
१०२ अर्तेर्निच्च ।
१०३ पुर्जन्यः ।
१०४ वदेरान्यः ।
१०५ अमिनक्षियजिवधिपतिभ्योऽत्रन् ।
१०६ गडेरादेश्च कः ।
१०७ वृञश्चित् ।
१०८ सुविदेः कत्रन् ।
१०९ कृतेर्नुँम् च ।
११० भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् ।
१११ पृषिरञ्जिभ्यां कित् ।
११२ खलतिः ।
११३ शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।
११४ भृञश्चित् ।

११५ रुविदिभ्यां ङित् ।
११६ उपसर्गे वसेः ।
११७ अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ।
११८ वेञस्तुँट् च ।
११९ वहियुभ्यां णित् ।
१२० वयश्च ।
१२१ दिवः कित् ।
१२२ कृशृशलिकलिगर्दिभ्योऽभच्
१२३ ऋषिवृषिभ्यां कित् ।
१२४ रुषेर्निल्लुष् च ।
१२५ रासिवल्लिभ्यां च ।
१२६ जृविशिभ्यां झच् ।
१२७ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ।
१२८ तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ।
१२९ हन्तेर्मुँट् हि च ।
१३० भन्देर्नलोपश्च ।
१३१ ऋच्छेररः ।
१३२ अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ।
१३३ कुवः क्रन् ।
१३४ अञ्जिमदिमन्दिभ्य आरन् ।
१३५ गडेः कड च ।
१३६ शृङ्गारभृङ्गारौ ।
१३७ कञ्जिमृजिभ्यां चित् ।
१३८ कमेः किदुच्चोपधायाः ।
१३९ तुषारादयश्च ।
१४० दीङो नुँट् च ।
१४१ सर्तेरपः षुक् च ।
१४२ उषिकुटिदलिकचिखजिभ्यः कपन् ।
१४३ क्वणेः सम्प्रसारणञ्च ।
१४४ कपश्चाक्रवर्मणस्य ।
१४५ विटपविष्टपविशिपोलपाः ।
१४६ वृतेस्तिकन् ।
१४७ कृतिभिदिलतिभ्यः कित् ।
१४८ इष्यशिभ्यां तकन् ।
१४९ इणस्तशन्तशसुनौ ।
१५० वीपतिभ्यां तनन् ।
१५१ दृदलिभ्यां भः ।
१५२ अर्तिगृभ्यां भन् ।
१५३ इणः कित् ।
१५४ असिसञ्जिभ्यां क्थिन् ।
१५५ प्लुषिकुषिशुषिभ्यः क्सिः ।
१५६ अशेर्नित् ।
१५७ इषेः क्सुः ।
१५८ अवितृस्तृतन्त्रिभ्य ईः ।
१५९ यापोः किद् द्वे च ।
१६० लक्षेर्मुँट् च ॥

इति तृतीयः पादः

## चतुर्थः पादः

१ वातप्रमीः ।
२ ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः क्त्निच्-यतुजलिजिष्णुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः ।
३ श्रः करन् ।
४ पुषः कित् ।
५ कलश्च ।
६ गमेरिनिः ।
७ आङि णित् ।
८ भुवश्च ।
९ प्र स्थः ।
१० परमे कित् ।
११ मन्थः ।
१२ पतः स्थ च ।
१३ खजेराकः ।
१४ वलाकादयश्च ।
१५ पिनाकादयश्च ।
१६ कषिदूषीभ्यामीकन् ।
१७ अनिहृषिभ्यां किच्च ।
१८ चङ्कणः कङ्कण च ।
१९ शृपृवृञां द्वे रुँक् चाभ्यासस्य ।
२० फर्फरीकादयश्च ।
२१ ईषेः किद्ध्रस्वश्च ।
२२ ऋजेश्च ।
२३ सर्तेर्नुँम् च ।
२४ मृडः कीकच्कङ्कणौ ।
२५ अलीकादयश्च ।
२६ कृतभ्यामीषन् ।
२७ शृपृभ्यां किच्च ।
२८ अर्जेर्ऋज च ।
२९ अम्बरीषः ।
३० कृशृपृकटिपटिशौटिभ्य ईरन् ।
३१ वशेः किच्च ।
३२ कशेर्मुँट् च ।
३३ कृञ उच्च ।
३४ घसेः किच्च ।
३५ गभीरगम्भीरौ ।
३६ विषाविहा ।
३७ पच एलिमच् ।
३८ शीङो धुक्लक्वलञ्वालनः ।
३९ मृकणिभ्यामूकोकणौ ।
४० वलेरूकः ।
४१ उलूकादयश्च ।
४२ शलिमण्डिभ्यामूकण् ।
४३ नियो मिः ।
४४ अर्तेरूच्च ।
४५ भुवः कित् ।
४६ अश्नोते रश च ।
४७ दल्मिः ।
४८ वीज्याज्वरिभ्यो निः ।

४९ सृवृषिभ्यां कित् ।
५० अङ्गेर्नलोपश्च ।
५१ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।
५२ घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः ।
५३ वृदृभ्यां विन् ।
५४ जृशॄस्तॄजागृभ्यः क्विन् ।
५५ दिवो द्वे दीर्घश्चाभ्यासस्य ।
५६ कृविघृष्विछविस्थविकिकीदिवि
५७ पातेर्डतिः ।
५८ शकेर्ऋतिन् ।
५९ अमेरतिः ।
६० वहिवस्यर्तिभ्यश्चित् ।
६१ अञ्चेः को वा ।
६२ हन्तेरंह च ।
६३ रमेर्नित् ।
६४ सूङः क्रिः ।
६५ अदिशदिभूशुभिभ्यः क्रिन् ।
६६ वङ्क्र्यादयश्च ।
६७ राशदिभ्यां त्रिप् ।
६८ अदेस्त्रिनिश्च ।
६९ पतेरत्रिन् ।
७० मृकणिभ्यामीचिः ।
७१ श्वयतेश्चित् ।
७२ वेञो डिच्च ।
७३ ऋहनिभ्यामूषन् ।
७४ पुरः कुषन् ।
७५ पृनहिकलिभ्य उषच् ।
७६ पीयेरूषन् ।
७७ मस्जेर्नुँम् च ।
७८ गण्डेश्च ।
७९ अर्तेररुः ।
८० कुटः किच्च ।
८१ शकादिभ्योऽटन् ।
८२ कृकदिकडिकटिभ्योऽम्बच् ।
८३ कदेर्णित्पक्षिणि ।
८४ कलिकर्द्योरमः ।
८५ कुणिपुल्योः किन्दच् ।
८६ कुपेर्वा वश्च ।
८७ नौ षञ्जेर्घथिन् ।
८८ उद्यर्तेश्चित् ।
८९ सर्तेर्णिच्च ।
९० खर्जिपिञ्जादिभ्य ऊरोलचौ ।
९१ कुवश्चट् दीर्घश्च ।
९२ समीणः ।
९३ सिवेष्टेरू च ।
९४ शमेर्वन् ।
९५ उल्बादयश्च ।
९६ स्थः स्तोम्बजवकौ ।
९७ शाशपिभ्यां ददनौ ।
९८ अब्दादयश्च ।
९९ वलिमलितनिभ्यः कयन् ।

१०० वृहोः षुग्दुकौ च ।
१०१ मीपीभ्यां रुः ।
१०२ जत्र्वादयश्च ।
१०३ रुशातिभ्यां क्रुन् ।
१०४ जनिदाच्युसृवृमदिपमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निन्शक्स्यढडटोटचः ।
१०५ अन्येभ्योऽपि दृश्यन्ते ।
१०६ कुसेरुम्भोमेदेताः ।
१०७ स्नानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेत्वलपल्वलधिष्ण्यशल्याः ।
१०८ मूशक्यविभ्यः क्लः ।
१०९ माछाशसिभ्यो यः ।
११० सुनोतेश्च ।
१११ जनेर्यक् ।
११२ अघ्न्यादयश्च ।
११३ स्नामदिपद्यर्तिपृशकिभ्यो वनिप् ।
११४ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ।
११५ ध्याप्योः सम्प्रसारणञ्च ।
११६ अदेर्ध च ।
११७ प्र ईरशदोस्तुट् च ।
११८ सर्वधातुभ्य इन् ।
११९ हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ।
१२० इगुपधात् कित् ।
१२१ भ्रमेः सम्प्रसारणञ्च ।
१२२ क्रमितमिशतिस्तम्भामत इच्च ।
१२३ मनेरुच्च ।
१२४ वर्णे बलिश्चाहिरण्ये ।
१२५ वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ।
१२६ नहो भश्च ।
१२७ कृषेर्वृद्धिश्छन्दसि ।
१२८ श्रः शकुनौ ।
१२९ कृञ उदीचां कारुषु ।
१३० जनिघसिभ्यामिण् ।
१३१ अज्यतिभ्याञ्च ।
१३२ पादे च ।
१३३ अशिपणाय्योरुडायलुकौ च
१३४ वातेर्डिच्च ।
१३५ प्रे हरतेः कूपे ।
१३६ नौ व्यो यलोपः पूर्वस्य च दीर्घः ।
१३७ समाने ख्यः स चोदात्तः ।
१३८ आङि श्रिहनिभ्यां ह्रस्वश्च
१३९ अच इः ।

१४० खनिकष्यञ्ज्यसिवसिवनि-
सनिध्वनिग्रन्थिचरिभ्यश्च ।
१४१ वृतेश्छन्दसि ।
१४२ भ्रुजेः किच्च ।
१४३ कृगृशृपृकुटिभिदिछिदिभ्यश्च ।
१४४ कुण्ठिकम्प्योर्नलोपश्च ।
१४५ सर्वधातुभ्यो मनिँन् ।
१४६ बृंहेर्नोऽच्च ।
१४७ अशिशकिभ्यां छन्दसि ।
१४८ हृभृधृसृस्तृशृभ्य इमनिँच् ।
१४९ जनिमृङ्भ्यामिमनिँन् ।
१५० वेञः सर्वत्र ।
१५१ नामन्सीमन्व्योमन्रोमन्-
लोमन्पाप्मन्ध्यामन् ।
१५२ मिथुने मनिँः ।
१५३ सातिभ्यां मनिँन्मनिँणौ ।
१५४ हनिमशिभ्यां सिकन् ।
१५५ कोररन् ।
१५६ गिर उडच् ।
१५७ इन्देः कमिँन्नलोपश्च ।
१५८ कायतेर्डिमिँः ।
१५९ सर्वधातुभ्यः ष्ट्रन् ।
१६० भ्रसिजगमिनमिहनिविश्यशां
वृद्धिश्च ।
१६१ दिवेर्द्युच्च ।
१६२ उषिखनिभ्यां कित् ।
१६३ सिविमुच्योष्टेरू च ।
१६४ अमिचिमिशसिभ्यः क्त्रः ।
१६५ पुवो ह्रस्वश्च ।
१६६ स्त्यायतेर्ड्ट् ।
१६७ गुधृवीपचिवचियमिसदि-
क्षदिभ्यस्त्रः ।
१६८ हुयामाश्रुभसिभ्यस्त्रन् ।
१६९ गमेरा च ।
१७० दादिभ्यश्छन्दसि ।
१७१ भूवादिगृभ्यो णित्रन् ।
१७२ चरेर्वृत्ते ।
१७३ अशित्रादिभ्य इत्रोत्रौ ।
१७४ अमेर्द्विषति चित् ।
१७५ आः समिण्निकषिभ्याम् ।
१७६ चितेः कणः कश्च ।
१७७ सूचेः स्मन् ।
१७८ पातेर्डुम्सुँन् ।
१७९ रुचिभुजिभ्यां किष्यन् ।
१८० वसेस्तिः ।
१८१ सावसेः ।
१८२ वौ तसेः ।
१८३ पदिप्रथिभ्यां नित् ।
१८४ दृणातेर्ह्रस्वश्च ।
१८५ कृतकृपिभ्यः कीटन् ।
१८६ रुचिवचिकुचिकुटिभ्यः
कितच् ।

१८७ कुटिकुषिभ्यां क्मलन् ।
१८८ कुषेर्लश्च ।
१८९ सर्वधातुभ्योऽसुँन् ।
१९० रपेरत एच्च ।
१९१ अशेर्देवने युँट् च ।
१९२ उब्जेर्बले बलोपश्च ।
१९३ श्वेः सम्प्रसारणञ्च ।
१९४ श्रयतेः स्वाङ्गे शिरः किच्च ।
१९५ अर्तेरुच्च ।
१९६ व्याधौ शुँट् च ।
१९७ उदके तुँट् च ।
१९८ इण आगसि ।
१९९ रिचेर्धने घिच्च ।
२०० चायतेरन्ने ह्रस्वश्च ।
२०१ वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुँट् च ।
२०२ स्रुरीभ्यां तुँट् च ।
२०३ पातेर्बले जुँट् च ।
२०४ उदके थुँट् च ।
२०५ अन्ने च ।
२०६ अदेर्नुँमूर्धौ च ।
२०७ स्कन्देश्च स्वाङ्गे ।
२०८ आपः कर्माख्यायां ह्रस्वो नुँट् च वा ।
२०९ रूपे जुँट् च ।
२१० उदके नुँम्भौ च ।
२११ नहेर्दिवि भश्च ।
२१२ इण आगोऽपराधे च ।
२१३ अमेर्हुँक्च ।
२१४ रमेश्च ।
२१५ देशे ह च ।
२१६ अञ्च्यञ्जियुजिभृजिभ्यः कुँश्च ।
२१७ भूरञ्जिभ्यां कित् ।
२१८ वसेर्णित् ।
२१९ चन्देरादेश्च छः ।
२२० पचिवचिभ्यां सुँट् च ।
२२१ वहिहाधाञ्भ्यश्छन्दसि ।
२२२ इणश्वासिँः ।
२२३ मिथुनेऽसिँः पूर्ववच्च सर्वम् ।
२२४ नञि हन एह च ।
२२५ विधाञो वेध च ।
२२६ नुवो धुँट् च ।
२२७ गतिकारकोपपदयोः पूर्वपद-प्रकृतिस्वरत्वञ्च ।
२२८ चन्द्रे मो डित् ।
२२९ वयसि धाञः ।
२३० पयसि च ।
२३१ पुरसि च ।
२३२ पुरूरवाः ।
२३३ चक्षेर्बहुलं शिच्च ।
२३४ उषः किच्च ।

२३५ दमेरुनसिँः ।
२३६ अङ्गिराः ।
२३७ अप्सराः ।
२३८ विदिभुजिभ्यां विश्वे ।
२३९ वशेः कनसिँः ।

इति चतुर्थः पादः

—:*:—

पञ्चमः पादः

१ अदिभुवो डुतच् ।
२ गुधेरूमः ।
३ मसेरूरः ।
४ स्थः किच्च ।
५ पातेरतिः ।
६ वातेर्नित् ।
७ अर्तेश्च ।
८ तृहेः क्नो हलोपश्च ।
९ वृन्लुठितनिताडिभ्य उलच-तण्डश्च ।
१० दंसेष्टटनौ न आ च ।
११ दंशेश्च ।
१२ उदिचेर्डैसिः ।
१३ नौ दीर्घश्च ।
१४ सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ।
१५ पूञो यण्णुँग्घ्रस्वश्च ।
१६ स्रंसेः शिः कुँट् किच्च ।
१७ अर्तेः क्युरुच्च ।
१८ हिंसेरीरन्नीरचौ ।
१९ उदि दृणातेरलचौ पूर्वपदान्त्य-लोपश्च ।
२० डित् खनेर्मुट् चोदात्तः ।
२१ अमेः सन् ।
२२ मुहेः खो मूर्च ।
२३ नहेर्हलोपश्च ।
२४ शीङो ह्रस्वश्च ।
२५ माङ ऊखो मय च ।
२६ कलिगलिभ्यां फगस्योच्च ।
२७ स्पृशेः श्वण्शुनौ पृ च ।
२८ श्मनि श्रयतेर्डुन् ।
२९ अश्वादयश्च ।
३० जनेष्टन् नलोपश्च ।
३१ अच् तस्य जङ्घ च ।
३२ हन्तेः शरीरावयवे द्वे च ।
३३ क्लिशेरन् लो लोपश्च ।
३४ फलेरितजादेश्च पः ।
३५ कृञादिभ्यः सञ्ज्ञायां वुन् ।
३६ चीकयतेराद्यन्तविपर्ययश्च ।
३७ पचिमच्योरिच्चोपधायाः ।
३८ जनेररष्ठ च ।
३९ वचिमनिभ्यां चिच्च ।
४० ऊर्जि दृणातेरलचौ ।
४१ कुदरादयश्च ।

४२ हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ।
४३ क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च
४४ हर्यतेः कन्यन् हिर च ।
४५ कृञः पासः ।
४६ जनेस्तु रश्च ।
४७ ऊर्णोतेर्डः ।
४८ दधातेर्यन्नुँट् च ।
४९ जीर्यतेः क्रिन् रश्च वः ।
५० मव्यतेर्यलोपो मश्चापतुँट् चालः ।
५१ ऋजेः कीकच् ।
५२ तनोतेर्डउः सन्वच्च ।
५३ अर्भकुपृथुकुपाका वयसि ।
५४ अवद्यावमाधमार्वरेफाः कुत्सिते
५५ लीरीङोर्ह्रस्वः पुँट् च तरौ श्लेषणकुत्सनयोः ।
५६ क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ।
५७ अश्नोतेराशुकर्मणि वरट् च ।
५८ चतेरुरन् ।
५९ प्राततेररँन् ।
६० अमेस्तुँट् च ।
६१ दहेर्गो हलोपो दश्च नः ।
६२ सिचेः सञ्ज्ञायां हनुँमौ कश्च ।
६३ व्याङि घ्रातेश्च जातौ ।
६४ हन्तेरच् घुरँ च ।
६५ क्षमेरुपधालोपश्च ।
६६ तरतेर्ड्रिः ।
६७ ग्रहेरनिः ।
६८ प्रथेरमच् ।
६९ चरेश्च ।
७० मङ्गेरलच् ॥

इति पञ्चमः पादः

इत्युणादि-सूत्रपाठः ॥

# लिङ्गानुशासन-सूत्रपाठः

अथ स्त्रीलिङ्गाधिकारः

१ लिङ्गम् ।

२ स्त्री ।

३ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ।

४ अन्यूप्रत्ययान्तो धातुः ।

५ अशनिभरण्यरणयः पुंसि च ।

६ मिन्यन्तः ।

७ वह्निवृष्ण्यग्नयः पुंसि ।

८ श्रोणियोन्यूर्मयः पुंसि च ।

९ क्तिन्नन्तः ।

१० ईकारान्तश्च ।

११ ऊङाबन्तश्च ।

१२ य्वन्तमेकाक्षरम् ।

१३ विंशत्यादिरानवतेः ।

१४ दुन्दुभिरक्षेषु ।

१५ नाभिरक्षत्रिये ।

१६ उभावन्यत्र पुंसि ।

१७ तलन्तः ।

१८ भूमिविद्युत्सरिल्लतावनिताभिधानानि ।

१९ यादो नपुंसकम् ।

२० भास्स्रुक्स्रग्दिग्दृगुष्णिगुपानहः ।

२१ स्थूणोर्णे नपुंसके च ।

२२ गृहशशाभ्यां क्लीबे ।

२३ प्रावृड्विप्रुड्रुट्तृड्विट्त्विषः

२४ दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः ।

२५ तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः

२६ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ।

२७ प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ।

२८ आशीर्धूःपूर्गीर्द्वारः ।

२९ अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ।

३० स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।

३१ तृटिसीमासम्बध्याः ।

३२ चुल्लिवेणिखार्यश्च ।

३३ ताराधाराज्योत्स्नादयश्च ।

३४ शलाका स्त्रियां नित्यम् ।

अथ पुँल्लिङ्गाधिकारः

१ पुमान् ।

२ घञबन्तः ।

३ घाजन्तश्च ।

४ भयलिङ्गभगपदानि नपुंसके ।

५ नङन्तः ।

६ याच्ञा स्त्रियाम् ।

७ क्यन्तो घुः ।

८ इषुधिः स्त्री च ।

९ देवासुरात्मस्वर्गगिरिसमुद्र-नखकेशदन्तस्तनभुजकण्ठखड्ग-शरपङ्काभिधानानि ।

१० त्रिविष्टपत्रिभुवने नपुंसके ।

११ द्यौः स्त्रियाम् ।

१२ इषुबाहू स्त्रियां च ।

१३ बाणकाण्डौ नपुंसके च ।

१४ नान्तः ।

१५ क्रतुपुरुषकपोलगुल्फमेघा-भिधानानि ।

१६ अभ्रं नपुंसकम् ।

१७ उकारान्तः ।

१८ धेनुरज्जुकुहूसरयुतनुकरेणु-प्रियङ्गवः स्त्रियाम् ।

१९ समासे रज्जुः पुंसि च ।

२० श्मश्रुजानुस्वाद्वश्रुजतुत्रपु-तालूनि नपुंसके ।

२१ वसु चार्थवाची ।

२२ मद्गुमधुसीधुशीधुसानु-कमण्डलूनि नपुंसके च ।

२३ रुत्वन्तः ।

२४ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ।

२५ सक्तुर्नपुंसके च ।

२६ प्राग्रश्मेरकारान्तः ।

२७ कोपधः ।

२८ चिबुकशालूकप्रातिपदिकांशु-कोल्मुकानि नपुंसके ।

२९ कण्टकानीकसरकमोदकचषक-मस्तकपुस्तकतडाकनिष्कशुष्क-वर्चस्कपिनाकभाण्डकटक-शण्डकपिटकतालकफलककल्क-पुलाकानि नपुंसके च ।

३० टोपधः ।

३१ किरीटमुकुटललाटवटवीट-शृङ्गाटकरटलोष्टानि नपुंसके ।

३२ कुटकूटकपटकवाटकर्पटनट-निकटकीटकटानि नपुंसके च

३३ णोपधः ।

३४ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ।

३५ कार्षापणस्वर्णसुवर्णव्रणचरण-वृषणविषाणचूर्णतृणानि नपुंसके च ।

३६ थोपधः ।
३७ काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।
३८ काष्ठा दिगर्था स्त्रियाम् ।
३९ तीर्थप्रोथयूथगाथानि नपुंसके च
४० नोपधः ।
४१ जघनाजिनतुहिनकाननवन-वृजिनविपिनवेतनशासनसोपान-मिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।
४२ मानयानाभिधाननलिनपुलि-नोद्यानशयनासनस्थानचन्द-नालानसमानभवनवसनसम्भा-वनविभावनविमानानि नपुंसके च
४३ पोपधः ।
४४ पापरूपोडुपतल्पशिल्पपुष्प-शष्पसमीपान्तरीपाणि नपुंसके
४५ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।
४६ भोपधः ।
४७ तलभं नपुंसकम् ।
४८ जृम्भं नपुंसके च ।
४९ मोपधः ।
५० रुक्मसिध्मयुग्मेध्मगुल्मा-ध्यात्मकुङ्कुमानि नपुंसके ।
५१ सङ्ग्रामदाडिमकुसुमाश्रमक्षेम-क्षौमहोमोद्दामानि नपुंसके च
५२ योपधः ।
५३ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।
५४ गोमयकषायमलयान्वयाव्य-यानि नपुंसके च ।
५५ रोपधः ।
५६ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्र-क्षुद्रछिद्रनारतीरदूरकृच्छ्र-रन्ध्राश्रश्वभ्रभीरगभीरक्रूर-विचित्रकेयूरकेदारोदरशरीर-कन्दरमन्दरपञ्जराजरजठरा-जिरवैरचामरपुष्करगह्वरकुहर-कुटीरकुलीरचत्वरकाश्मीर-नीराम्बरशिशिरतन्त्रयन्त्रक्षत्र-क्षेत्रमित्रकलत्रछत्रसूत्रवक्त्रनेत्र-गोत्राङ्गुलित्रभलत्रास्त्रशस्त्र-शास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके ।
५७ शुक्रमदेवतायाम् ।
५८ चक्रवज्रान्धकारसारावारपार-क्षीरतोमरशृङ्गारभृङ्गारमन्दा-रोशीरतिमिरशिशिराणि नपुं-सके च ।
५९ षोपधः ।
६० शिरीषर्जीषाम्बरीषपीयूषपुरीष-किल्बिषकल्माषाणि नपुंसके ।

६१ यूषकरीषमिषविषवर्षाणि नपुंसके च ।

६२ सोपधः ।

६३ पनसबिसबुससाहसानि नपुंसके ।

६४ चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च ।

६५ कंसं चाप्राणिनि ।

६६ रश्मिदिवसाभिधानानि ।

६७ दीधितिः स्त्रियाम् ।

६८ दिनाहनी नपुंसके ।

६९ मानाभिधानानि ।

७० द्रोणाढकौ नपुंसके च ।

७१ खारीमानिके स्त्रियाम् ।

७२ दाराक्षतलाजासूनां बहुत्वञ्च ।

७३ नाड्यपजनोपपदानि व्रणाङ्गपदानि ।

७४ मरुद्गरुत्तरदृत्विजः ।

७५ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ।

७६ ध्वजगजमुञ्जपुञ्जाः ।

७७ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः ।

७८ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।

७९ वंशांशपुरोडाशाः ।

८० हृदकन्दकुन्दबुद्बुदशब्दाः ।

८१ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।

८२ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ।

८३ सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ।

---

अथ नपुंसकलिङ्गाधिकारः

१ नपुंसकम् ।

२ भावे ल्युडन्तः ।

३ निष्ठा च ।

४ त्वष्यञौ तद्धितौ ।

५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।

६ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि ।

७ अव्ययीभावः ।

८ द्वन्द्वैकत्वम् ।

९ अभाषायां हेमन्तशिशिरावहोरात्रे च ।

१० अनञ्कर्मधारयस्तत्पुरुषः ।
११ अनल्पे छाया ।
१२ राजामनुष्यपूर्वा सभा ।
१३ सुरासेनाच्छायाशालानिशाः स्त्रियां च ।
१४ शिष्टः परवत् ।
१५ रात्राह्नाहाः पुंसि ।
१६ अपथपुण्याहे नपुंसके ।
१७ सङ्ख्यापूर्वा रात्रिः ।
१८ द्विगुः स्त्रियां च ।
१९ इसुसन्तः ।
२० अर्चिः स्त्रियां च ।
२१ छदिः स्त्रियामेव ।
२२ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ।
२३ सीरार्थौदनाः पुंसि ।
२४ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।
२५ अटवी स्त्रियाम् ।
२६ लोपधः ।
२७ तूलोपलतालकुशूलतरलकम्बलदेवलवृषलाः पुंसि ।
२८ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च ।
२९ शतादिः संख्या ।
३० शतायुतप्रयुताः पुंसि च ।
३१ लक्षाकोटी स्त्रियाम् ।
३२ शङ्कुः पुंसि ।
३३ सहस्रः क्वचित् ।
३४ मन्द्व्यच्कोऽकर्त्तरि ।
३५ ब्रह्मन् पुंसि च ।
३६ नामरोमणी नपुंसके ।
३७ असन्तो द्व्यच्कः ।
३८ अप्सराः स्त्रियाम् ।
३९ त्रान्तः ।
४० यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।
४१ भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ।
४२ पत्रपात्रपवित्रसूत्रछत्राः पुंसि च
४३ बलकुसुमशुल्वपचनरणाभिधानानि ।
४४ पद्मकमलोत्पलानि पुंसि च ।
४५ आहवसङ्ग्रामौ पुंसि ।
४६ आजिः स्त्रियामेव ।
४७ फलजातिः ।
४८ वृक्षजातिः स्त्रियामेव ।
४९ वियज्जगत्सकृच्छकन्पृषच्छकृद्यकृदुदश्वितः ।

५० नवनीतावतानृतामृतनिमित्त-वित्तचित्तपित्तव्रतरजतवृत्त-पलितानि ।

५१ श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्ग-दधिसक्थ्यक्ष्यस्थ्यास्पदाकाश-कण्वबीजानि ।

५२ दैवं पुंसि च ।

५३ धान्याज्यसस्यरूप्यपण्यवर्ण्य-धिष्ण्यहव्यकव्यकाव्यसत्या-पत्यमूल्यशिक्यकुड्यमद्यहर्म्य-तूर्यसैन्यानि ।

५४ द्वन्द्वबर्हदुःखबडिशपिच्छ-बिम्बकुटुम्बकवचवरशरवृन्दा-रकाणि ।

५५ अक्षमिन्द्रिये ॥

अथ स्त्रीलिङ्गपुँल्लिङ्गाधिकारः

१ स्त्रीपुंसयोः ।

२ गोमणियष्टिमुष्टिपाटलिवस्ति-शाल्मलित्रुटिमसिमरीचयः ।

३ मृत्युसीधुकर्कन्धुसिन्धुकण्डु-रेणवः ।

४ गुणवचनमुकारान्तं नपुंसकं च

५ अपत्यार्थतद्धिते ।

अथ पुँल्लिङ्गनपुंसकलिङ्गाधिकारः

१ पुंनपुंसकयोः ।

२ घृतभूतमुस्तक्ष्वेलितैरावतपुस्त-बुस्तलोहिताः ।

३ शृङ्गार्धनिदाघोद्यमशल्यदृढाः ।

४ व्रजकुञ्जकुथकूर्चप्रस्थदर्पाभ्र-र्धर्चपुच्छाः ।

५ कबन्धौषधायुधान्ताः ।

६ दण्डमण्डखण्डशव सैन्धवपार्श्वा-काशकुशकाशाङ्कुशकुलिशाः ।

७ गृहमेहदेहपट्टपटहाष्टापदार्बुद-ककुदाश्च

अथाविशिष्टलिङ्गाधिकारः

१ अविशिष्टलिङ्गम् ।

२ अव्ययं कतियुष्मदस्मदः ।

३ ष्णान्ता सङ्ख्या ।

४ गुणवचनञ्च ।

५ कृत्याश्च ।

६ करणाधिकरणयोर्ल्युट् ।

७ सर्वादीनि सर्वनामानि ।

इति लिङ्गानुशासन-सूत्रपाठः ॥

# धा तु पा ठः

## भ्वादिगणः

१ भू सत्तायाम् ।

उदात्तः परस्मैभाषः[१] ।

एधादय आत्मनेभाषाः[२]—

२ एधँ वृद्धौ ।

३ स्पर्धँ सङ्घर्षे ।

४ गाधृँ प्रतिष्ठालिप्सयोर्ग्रन्थे च ।

५ बाधृँ विलोडने ।

६ नाथृँ, नाधृँ याच्ञोपतापैश्वर्याशीःषु ।

७ दधँ धारणे ।

८ स्कुदिँ आप्रवणे ।

९ श्विदिँ श्वैत्ये ।

१० वदिँ अभिवादनस्तुत्योः ।

११ भदिँ कल्याणे सुखे च ।।

१२ मदिँ स्तुतिमोदमदस्वप्नकान्तिगतिषु ।

१३ स्पदिँ किञ्चिच्चलने ।

१४ क्लिदिँ परिदेवने ।

१५ मुदँ हर्षे ।

१६ ददँ दाने ।

१७ ष्वदँ, स्वर्दँ आस्वादने

१८ उर्दँ माने क्रीडायाञ्च ।

१९ कुर्दँ, खुर्दँ, गुर्दँ, गुदँ क्रीडायामेव ।

२० षूदँ क्षरणे ।

२१ ह्रादँ अव्यक्ते शब्दे ।

२२ ह्लादीँ सुखे च ।

२३ स्वादँ आस्वादने ।

२४ पर्दँ कुत्सिते शब्दे ।

२५ यतीँ प्रयत्ने ।

२६ युतृँ, जुतृँ भासने ।

२७ विथृँ, वेथृँ याचने ।

२८ श्रथिँ शैथिल्ये ।

२९ ग्रथिँ कौटिल्ये ।

३० कत्थँ श्लाघायाम् ।

इत्युदात्ता अनुदात्तेतः ।
[ ३६+१ = ३७ ]

अतादय परस्मैभाषाः—

३१ अतँ सातत्यगमने ।

३२ चितीँ सञ्ज्ञाने ।

३३ च्युतिँर् आसेचने ।

---

१ परस्मैभाषः = परस्मैपदी ।
२ आत्मनेभाषः = आत्मनेपदी ।

३४ श्च्युतिँर् क्षरणे ।
३५ मन्थँ विलोडने ।
३६ कुथिँ, पुथिँ, लुथिँ, मथिँ हिंसासङ्क्लेशनयोः ।
३७ षिधुँ गत्याम् ।
३८ षिधूँ शास्त्रे माङ्गल्ये च ।
३९ खादृँ भक्षणे ।
४० खदँ स्थैर्ये हिंसायां च ।
४१ बदँ स्थैर्ये ।
४२ गदँ व्यक्तायां वाचि ।
४३ रदँ विलेखने ।
४४ णदँ अव्यक्ते शब्दे ।
४५ अर्दँ गतौ याचने च ।
४६ नर्दँ, गर्दँ शब्दे ।
४७ तर्दँ हिंसायाम् ।
४८ कर्दँ कुत्सिते शब्दे ।
४९ खर्दँ दन्दशूके ।
५० अतिँ, अदिँ बन्धने ।
५१ इदिँ परमैश्वर्ये ।
५२ बिदिँ, भिदिँ अवयवे ।
५३ गडिँ वदनैकदेशे ।
५४ णिदिँ कुत्सायाम् ।
५५ टुनदिँ समृद्धौ ।
५६ चदिँ आह्लादने दीप्तौ च ।
५७ त्रदिँ चेष्टायाम् ।
५८ कदिँ, क्रदिँ, क्लदिँ आह्वाने रोदने च ।
५९ क्लिदिँ परिदेवने ।
६० शुन्धँ शुद्धौ ।

उदात्ता उदात्तेतः।
[ ३८+३७=७५ ]

शीकादय आत्मनेभाषाः—
६१ शीकृँ सेचने ।
६२ लोकृँ दर्शने ।
६३ श्लोकृँ सङ्घाते ।
६४ द्रेकृँ, ध्रेकृँ शब्दोत्साहयोः ।
६५ रेकृँ शङ्कायाम् ।
६६ सेकृँ, स्रेकृँ, स्रकिँ, श्रकिँ, श्लकिँ गत्यर्थाः ।
६७ शकिँ शङ्कायाम् ।
६८ अकिँ लक्षणे ।
६९ वकिँ कौटिल्ये ।
७० मकिँ मण्डने ।
७१ ककृँ लौल्ये ।
७२ कुकृँ, वृकृँ आदाने ।
७३ चकृँ तृप्तौ प्रतिघाते च ।
७४ ककिँ, वकिँ, श्वकिँ, त्रकिँ, ढौकृँ, त्रौकृँ, ष्वस्कृँ, वस्कृँ, मस्कृँ, टिकृँ, टीकृँ, तिकृँ, तीकृँ, रघिँ, लघिँ गत्यर्थाः ।

---

३७ 'षिधँ गत्याम्' इति क्वचित् ।

७५ लघिँ भोजननिवृत्तावपि ।
७६ अघिँ, वघिँ, मघिँ गत्याक्षेपे ।
७७ मघिँ कैतवे च ।
७८ राघृँ, लाघृँ, द्राघृँ, ध्राघृँ सामर्थ्ये ।
७९ द्राघृँ आयामे च ।
८० श्लाघृँ कत्थने ।

उदात्ता अनुदात्तेतः ।
[ ४२ + ७५=११७ ]

फक्कादय परस्मैभाषाः—

८१ फक्कँ नीचैर्गतौ ।
८२ तकँ हसने ।
८३ तकिँ कृच्छ्रजीवने ।
८४ बुक्कँ भषणे ।
८५ कखँ हसने ।
८६ ओखृँ, राखृँ, लाखृँ, द्राखृँ, ध्राखृँ शोषणालमर्थयोः ।
८७ शाखृँ श्लाखृँ व्याप्तौ ।
८८ उखँ, उखिँ, वखँ वखिँ, मखँ, मखिँ, णखँ, णखिँ, रखँ, रखिँ, लखँ, लखिँ, इखँ, इखिँ, ईखिँ, वल्गँ, रगिँ, लगिँ, अगिँ, वगिँ, मगिँ, तगिँ, त्वगिँ, श्रगिँ, श्लगिँ, इगिँ, रिगिँ, लिगिँ गत्यर्थाः ।
८९ रिखँ, त्रखँ, त्रखिँ, शिखिँ इत्यपि केचित् ।
९० त्वगिँ कम्पने च ।
९१ युगिँ, जुगिँ, बुगिँ वर्जने ।
९२ घघँ हसने ।
९३ मघिँ मण्डने ।
९४ लघिँ शोषणे[1] ।
९५ शिघिँ आघ्राणे ।

उदात्ता उदात्तेतः ।
[ ५१+११७ = १६८ ]

वर्चादय आत्मनेभाषाः—

९६ वर्चँ दीप्तौ ।
९७ षचँ सेचने सेवने च ।
९८ लोचृँ दर्शने ।
९९ शचँ व्यक्तायां वाचि ।
१०० श्वचँ, श्वचिँ गतौ ।
१०१ कचँ बन्धने ।
१०२ कचिँ, काचिँ दीप्तिबन्धनयोः ।
१०३ मचँ, मुचिँ कल्कने ।
१०४ मचिँ धारणोच्छ्रायपूजनेषु ।
१०५ पचिँ व्यक्तीकरणे ।
१०६ ष्टुचँ प्रसादे ।

---

१. इदं धातुसूत्रं सर्वत्र नोपलभ्यते ।
१०५. 'पचँ व्यक्तीकरणे' इति केचन पठन्ति ।

१०७ ऋजँ गतिस्थानार्जनोपार्जनेषु ।

१०८ ऋजिँ, भृजीँ भर्जने ।

१०९ एजृँ, भ्रेजृँ, भ्राजृँ दीप्तौ ।

११० ईजँ गतिकुत्सनयोः ।

उदात्ता अनुदात्तेतः।
[ २१+१६८=१८९ ]

शुचादयः परस्मैभाषाः—

१११ शुचँ शोके ।

११२ कुचँ शब्दे तारे ।

११३ कुञ्चँ, क्रुञ्चँ गतिकौटिल्याल्पीभावयोः ।

११४ लुञ्चँ अपनयने ।

११५ अञ्चुँ गतिपूजनयो. ।

११६ वञ्चुँ, चञ्चुँ, तञ्चुँ, त्वञ्चुँ, म्रुञ्चुँ, म्लुञ्चुँ, म्रुचुँ, म्लुचुँ गत्यर्थाः

११७ ग्रुचुँ, ग्लुचुँ, कुजुँ, खुजुँ स्तेयकरणे ।

११८ ग्लुञ्चुँ, षस्जँ गतौ ।

११९ गुजँ, गुजिँ अव्यक्ते शब्दे।

१२० अर्चँ पूजायाम् ।

१२१ म्लेछँ अव्यक्ते शब्दे ।

१२२ लछँ, लाछिँ लक्षणे ।

१२३ वाछिँ इच्छायाम् ।

१२४ आछिँ आयामे ।

१२५ ह्रीछँ लज्जायाम् ।

१२६ हुर्छाँ कौटिल्ये ।

१२७ मुर्छाँ मोहसमुच्छ्राययोः ।

१२८ स्फुर्छाँ विस्तृतौ ।

१२९ युछँ प्रमादे ।

१३० उछिँ उञ्छे ।

१३१ उछीँ विवासे ।

१३२ ध्रजँ, ध्रजिँ, धृजँ, धृजिँ, ध्वजँ, ध्वजिँ गतौ ।

१३३ कूजँ अव्यक्ते शब्दे ।

१३४ अर्जँ, षर्जँ अर्जने ।

१३५ गर्जँ शब्दे ।

१३६ तर्जँ भर्त्सने ।

१३७ कर्जँ व्यथने ।

१३८ खर्जँ पूजने ।

१३९ अजँ गतिक्षेपणयोः ।

१४० तेजँ पालने ।

१४१ खजँ मन्थे ।

१४२ खजिँ गतिवैकल्ये ।

१४३ एजृँ कम्पने ।

१४४ टुओँस्फूर्जाँ वज्रनिर्घोषे ।

१४५ क्षि क्षये ।

१४६ क्षीजँ अव्यक्ते शब्दे ।

१४७ लजँ, लजिँ भर्जने ।

१४८ लाजँ, लाजिँ, भर्त्सने च ।

१४९ जजँ, जजिँ युद्धे ।

१५० तुजँ हिंसायाम् ।
१५१ तुजिँ पालने च ।
१५२ गजँ, गजिँ, गृजँ, गृजिँ, मुजँ, मुजिँ शब्दार्थाः ।
१५३ गजँ मदे च ।
१५४ वजँ, व्रजँ गतौ ।

क्षिवर्जम् उदात्ता उदात्तेतः ।
[ ७२+१८९=२६१ ]

अट्टादय आत्मनेभाषाः—

१५५ अट्टँ अतिक्रमणहिंसनयोः ।
१५६ वेष्टँ वेष्टने ।
१५७ चेष्टँ चेष्टायाम् ।
१५८ गोष्टँ, लोष्टँ सङ्घाते ।
१५९ घट्टँ चलने ।
१६० स्फुटँ विकसने ।
१६१ अठिँ गतौ ।
१६२ वठिँ एकचर्यायाम् ।
१६३ मठिँ, कठिँ शोके ।
१६४ मुठिँ पालने ।
१६५ हेठँ विबाधायाम् ।
१६६ एठँ च ।
१६७ हिडिँ गत्यनादरयोः ।
१६८ हुडिँ सङ्घाते ।
१६९ कुडिँ दाहे ।
१७० वडिँ विभाजने ।
१७१ मडिँ च ।
१७२ भडिँ परिभाषणे ।
१७३ पिडिँ सङ्घाते ।
१७४ मुडिँ मार्जने ।
१७५ तुडिँ तोडने ।
१७६ हुडिँ वरणे ।
१७७ चडिँ कोपे ।
१७८ शडिँ रुजायां सङ्घाते च ।
१७९ तडिँ ताडने ।
१८० पडिँ गतौ ।
१८१ कडिँ मदे ।
१८२ खडिँ मन्थे ।
१८३ हेडृँ, होडृँ अनादरे ।
१८४ वाडृँ आप्लाव्ये ।
१८५ द्राडृँ, ध्राडृँ विशरणे ।
१८६ शाडृँ श्लाघायाम् ।

उदात्ता अनुदात्तेतः ।
[ ३६+२६१=२९७ ]

शौटादय परस्मैभाषाः—

१८७ शौटृँ गर्वे ।
१८८ यौटृँ बन्धने ।
१८९ म्लेटृँ, म्रेडृँ उन्मादे ।
१९० कटेँ वर्षावरणयोः ।
१९१ चटेँ इत्येके ।
१९२ अटँ, पटँ गतौ ।

---

१८९ अत्र 'म्रेटृँ, म्लेडृँ' इत्यधिकौ क्वचित् ।

१९३ रटँ परिभाषणे ।
१९४ लटँ बाल्ये ।
१९५ शटँ रुजाविशरणगत्यवसादनेषु ।
१९६ वटँ वेष्टने ।
१९७ किटँ, खिटँ त्रासे ।
१९८ शिटँ, षिटँ, अनादरे ।
१९९ जटँ, झटँ सङ्घाते ।
२०० भटँ भृतौ ।
२०१ तटँ उच्छ्राये ।
२०२ खटँ काङ्क्षायाम् ।
२०३ णटँ नृतौ ।
२०४ पिटँ शब्दसङ्घातयोः ।
२०५ हटँ दीप्तौ च ।
२०६ षटँ अवयवे ।
२०७ लुटँ विलोडने ।
२०८ चिटँ परप्रैष्ये ।
२०९ विटँ शब्दे ।
२१० बिटँ आक्रोशे ।
२११ हिटँ इत्येके ।
२१२ इटँ, किटँ, कटीँ गतौ ।
२१३ मडिँ भूषायाम् ।
२१४ कुडिँ वैकल्ये ।
२१५ मुटँ, पुटँ[1] मर्दने ।
२१६ चुडिँ अल्पीभावे ।
२१७ मुडिँ खण्डने ।
२१८ पुडिँ चेत्येके ।
२१९ रुटिँ, लुटिँ स्तेये ।
२२० रुठिँ, लुठिँ इत्येके ।
२२१ स्फुटिँर् विशरणे ।
२२२ पठँ व्यक्तायां वाचि ।
२२३ वठँ स्थौल्ये ।
२२४ मठँ मदनिवासयोः ।
२२५ कठँ कृच्छ्रजीवने ।
२२६ रठँ परिभाषणे ।
२२७ हठँ प्लुतिशठत्वयोः । बलात्कार इत्येके ।
२२८ रुठँ, लुठँ, उठँ उपघाते ।
२२९ ऊठँ इत्येके ।
२३० पिठँ हिंसासङ्क्लेशनयोः ।
२३१ शठँ कैतवे च ।
२३२ शुठँ प्रतिघाते ।
२३३ शुठिँ इत्येके ।
२३४ कुठिँ च ।
२३५ लुठिँ आलस्ये प्रतिघाते च ।
२३६ शुठिँ शोषणे ।
२३७ रुठिँ, लुठिँ गतौ ।
२३८ चुड्डँ भावकरणे ।
२३९ अड्डँ अभियोगे ।
२४० कड्डँ कार्कश्ये ।

२११- 'हिठँ' इत्यन्ये ।
1. मर्दनेऽर्थे 'पुटँ' धातुरन्यत्र नोपलभ्यते ।

२४१ क्रीडृँ विहारे ।
२४२ तुडृँ तोडने ।
२४३ तूडृँ इत्येके ।
२४४ हुडृँ, हूडृँ, होडृँ गतौ ।
२४५ रौडृँ अनादरे ।
२४६ रोडृँ, लोडृँ उन्मादे ।
२४७ अडँ उद्यमने ।
२४८ लडँ विलासे ।
२४९ कडँ मदे ।
२५० कडिँ इत्येके ।
२५१ गडिँ वदनैकदेशे ।

उदात्ता उदात्तेतः ।
[ ७६ + २९७ = ३७३ ]

तिपादय आत्मनेभाषाः—

२५२ तिपृँ, तेपृँ, ष्टिपृँ, ष्टेपृँ क्षरणार्थाः ।
२५३ थिपृँ, थेपृँ इत्यन्ये ।
२५४ तेपृँ कम्पने च ।
२५५ ग्लेपृँ दैन्ये ।
२५६ टुवेपृँ कम्पने ।
२५७ केपृँ, गेपृँ, ग्लेपृँ च ।
२५८ मेपृँ, रेपृँ, लेपृँ गतौ ।
२५९ हेपृँ, घेपृँ च ।
२६० त्रपूँष् लज्जायाम् ।
२६१ कपिँ चलने ।
२६२ रबिँ, लबिँ, अबिँ शब्दे ।
२६३ लबिँ अवस्रंसने च ।
२६४ कबृँ वर्णे ।
२६५ क्लीबृँ अधार्ष्ट्ये ।
२६६ क्षीबृँ मदे ।
२६७ शीभृँ कत्थने ।
२६८ चीभृँ च ।
२६९ रेभृँ शब्दे ।
२७० अभिँ, रभिँ इत्येके ।
२७१ ष्टभिँ, स्कभिँ प्रतिबन्धे ।
२७२ जभीँ, जृभिँ गात्रविनामे ।
२७३ शल्भँ कत्थने ।
२७४ वल्भँ भोजने ।
२७५ गल्भँ धार्ष्ट्ये ।
२७६ स्रम्भुँ प्रमादे ।
२७७ श्रम्भुँ इत्येके ।
२७८ ष्टुभँ स्तम्भे ।

तिपिवर्जमुदात्ता अनुदात्तेतः ।
[ ३९ + ३७३ = ४१२ ]

गुपादयः परस्मैभाषाः—

२७९ गुपूँ रक्षणे ।
२८० धूपँ सन्तापे ।
२८१ जपँ, जल्पँ व्यक्तायां वाचि
२८२ जपँ मानसे च ।

---

२५३ 'दिपृँ, देपृँ' इत्यन्ये ।

२७८ 'ष्टुभुँ स्तम्भे' इत्यन्ये ।

२८३ चपँ सान्त्वने ।
२८४ षपँ समवाये ।
२८५ रपँ, लपँ व्यक्तायां वाचि ।
२८६ चुपँ मन्दायां गतौ ।
२८७ तुपँ, तुम्पँ, त्रुपँ, त्रुम्पँ, तुफँ, तुम्फँ, त्रुफँ, त्रुम्फँ हिंसार्थाः ।
२८८ पर्पँ, रफँ, रफिँ, अर्बँ, पर्बँ, लर्बँ, बर्बँ, मर्बँ कर्बँ खर्बँ, गर्बँ, शर्बँ षर्बँ, चर्बँ गतौ ।
२८९ चर्बँ अदने च ।
२९० कुबिँ आच्छादने ।
२९१ लुबिँ, तुबिँ अर्दने ।
२९२ चुबिँ वक्त्रसंयोगे ।
२९३ षृभुँ, षृम्भुँ हिंसार्थौ ।
२९४ षिभुँ, षिम्भुँ इत्येके ।
२९५ शुभँ, शुम्भँ भाषणे । हिंसायामित्यन्ये ।

उदात्ता उदात्तेतः ।
[ ४१+४१२=४५३ ]

घिणादय आत्मनेभाषाः—

२९६ घिणि॒ँ, घुणि॒ँ, घृणि॒ँ ग्रहणे
२९७ घुणँ॒, घूर्णँ॒ भ्रमणे ।
२९८ पणँ॒ व्यवहारे स्तुतौ च ।
२९९ पनँ॒ च ।
३०० भामँ॒ क्रोधे ।
३०१ क्षमूँ॒ष् सहने ।
३०२ कमुँ॒ कान्तौ ।

उदात्ता अनुदात्तेतः ।
[ १०+४५३=४६३ ]

अणादयः परस्मैभाषाः—

३०३ अणँ, रणँ, वणँ, भणँ, मणँ, कणँ, क्वणँ व्रणँ, भ्रणँ, ध्वणँ शब्दार्थाः ।
३०४ धणँ इत्येके ।
३०५ ओणृँ अपनयने ।
३०६ शोणृँ वर्णगत्योः ।
३०७ श्रोणृँ सङ्घाते ।
३०८ श्लोणृँ च ।
३०९ पैणृँ गतिप्रेरणश्लेषणेषु ।
३१० ध्रणँ, बणँ शब्दे ।
३११ कनीँ दीप्तिकान्तिगतिषु ।
३१२ ष्टनँ, वनँ शब्दे ।
३१३ वनँ, षणँ सम्भक्तौ ।
३१४ अमँ गत्यादिषु ।
३१५ द्रमँ, हम्मँ, मीमृँ गतौ ।
३१६ मीमृँ शब्दे च ।
३१७ चमुँ, छमुँ, जमुँ, झमुँ अदने ।
३१८ जिमुँ इत्येके ।

---

३०९. 'प्रैणृँ' इति पाठोऽन्यत्र ।

३१९ क्रमुँ पादविक्षेपे ।

उदात्ता उदात्तेतः ।
[ ३२+४६४=४९६ ]

अथादय आत्मनेभाषाः—

३२० अयँ॒, वयँ॒, पयँ॒, मयँ॒, चयँ॒, तयँ॒, णयँ॒ गतौ ।

३२१ णयँ॒ रक्षणे च ।

३२२ दयँ॒ दानगतिरक्षणहिंसादानेषु

३२३ रयँ॒ गतौ ।

३२४ ऊयीँ॒ तन्तुसन्ताने ।

३२५ पूयीँ॒ विशरणे ।

३२६ क्नूयीँ॒ शब्दे उन्दे च ।

३२७ क्ष्मायीँ॒ विधूनने ।

३२८ स्फायीँ॒, ओँप्यायीँ॒ वृद्धौ

३२९ तायृँ॒ सन्तानपालनयोः ।

३३० शलँ॒ चलनसंवरणयोः ।

३३१ वलँ॒, वल्लँ॒ संवरणे संचलने च

३३२ मलँ॒, मल्लँ॒ धारणे ।

३३३ भलँ॒, भल्लँ॒ परिभाषणहिंसादानेषु ।

३३४ कलँ॒ शब्दसङ्ख्यानयोः ।

३३५ कल्लँ॒ अव्यक्ते शब्दे ।

३३६ तेवृँ॒, देवृँ॒ देवने ।

३३७ षेवृँ॒, गेवृँ॒, ग्लेवृँ॒, पेवृँ॒, मेवृँ॒, म्लेवृँ॒ सेवने ।

३३८ शेवृँ॒, खेवृँ॒, केवृँ॒ इत्यप्येके ।

३३९ रेवृँ॒ प्लवगतौ ।

उदात्ता अनुदात्तेतः ।
[ ३७+४९६=५३३ ]

मव्यादयः परस्मैभाषाः—

३४० मव्यँ बन्धने ।

३४१ सूर्क्ष्यँ, ईर्क्ष्यँ, ईर्ष्यँ ईर्ष्यार्थाः ।

३४२ हयँ गतौ ।

३४३ शुच्यँ, चुच्यँ अभिषवे ।

३४४ हर्यँ गतिकान्त्योः ।

३४५ अलँ भूषणपर्याप्तिवारणेषु ।

३४६ ञिफलाँ विशरणे ।

३४७ मीलँ, श्मीलँ, स्मीलँ, क्ष्मीलँ निमेषणे ।

३४८ पीलँ प्रतिष्टम्भे ।

३४९ णीलँ वर्णे ।

३५० शीलँ समाधौ ।

३५१ कीलँ बन्धने ।

३५२ कूलँ आवरणे ।

३५३ शूलँ रुजायां सङ्घाते च ।

३५४ तूलँ निष्कर्षे ।

३५५ पूलँ सङ्घाते ।

३५६ मूलँ प्रतिष्ठायाम् ।

३५७ फलँ निष्पत्तौ ।

३५८ चुल्लँ भावकरणे ।

---

३३७. 'एवृँ', 'प्लेवृँ' इत्यधिकौ क्वचित्

३३८. 'क्षेवृँ' इत्यधिकः क्वचित् ।

३५९ फुल्लँ विकसने ।
३६० चिल्लँ शैथिल्ये भावकरणे च
३६१ तिलँ गतौ ।
३६२ तिल्लँ इत्यन्ये ।
३६३ वेलँ, चेलँ, केलँ, खेलँ, क्ष्वेलँ, वेल्लँ चलने ।
३६४ पेलँ, फेलँ, खेलँ, शेलँ, षेलँ गतौ ।
३६५ स्खलँ सञ्चलने ।
३६६ खलँ सञ्चये च ।
३६७ गलँ अदने ।
३६८ षलँ गतौ ।
३६९ दलँ विशरणे ।
३७० श्वलँ, श्वल्लँ आशुगमने ।
३७१ खोलँ, खोर्ऋँ गतिप्रतिघाते ।
३७२ धोर्ऋँ गतिचातुर्ये ।
३७३ त्सरँ छद्मगतौ ।
३७४ क्मरँ हूर्छने ।
३७५ अभ्रँ, वभ्रँ, मभ्रँ, चरँ गत्यर्थाः ।
३७६ चरँ भक्षणे च ।
३७७ ष्ठिवुँ निरसने ।
३७८ जि जये
३७९ जीवँ प्राणधारणे ।
३८० पीवँ, मीवँ, तीवँ, णीवँ स्थौल्ये ।
३८१ क्षीवुँ, क्षेवुँ निरसने ।
३८२ उर्वीँ, तुर्वीँ, थुर्वीँ, दुर्वीँ, धुर्वीँ हिंसार्थाः ।
३८३ गुर्वीँ उद्यमने ।
३८४ मुर्वीँ बन्धने ।
३८५ पुर्वँ, पर्वँ, मर्वँ पूरणे ।
३८६ चर्वँ अदने ।
३८७ भर्वँ हिंसायाम् ।
३८८ कर्वँ, खर्वँ, गर्वँ दर्पे ।
३८९ अर्वँ, शर्वँ, षर्वँ हिंसायाम्
३९० इविँ व्याप्तौ ।
३९१ पिविँ, मिविँ, णिविँ सेवने । सेचने चेत्येके ।
३९२ हिविँ, दिविँ, धिविँ, जिविँ प्रीणनार्थाः ।
३९३ रिविँ, रविँ, धविँ गत्यर्थाः
३९४ कृविँ हिंसाकरणयोश्च ।
३९५ मवँ बन्धने ।
३९६ अवँ रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ।

जयतिवर्जमुदात्ता उदात्तेतः
[ ९६+५३३=६२९ ]

---

३८५ 'फर्वँ' इत्यधिकोऽन्यत्र ।

उभयतोभाषः—

३९७ धावुँ गतिशुद्ध्योः ।

उदात्तः स्वरितेत् ।
[ १+६२९=६३० ]

धुक्षादय आत्मनेभाषाः—

३९८ धुक्षँ, धिक्षँ सन्दीपनक्लेशनजीवनेषु ।

३९९ वृक्षँ वरणे ।

४०० शिक्षँ विद्योपादाने ।

४०१ भिक्षँ भिक्षायामलाभे लाभे वा ।

४०२ क्लेशँ अव्यक्तायां वाचि । बाधने इत्यन्ये ।

४०३ दक्षँ वृद्धौ शीघ्रार्थे च ।

४०४ दीक्षँ मौण्ड्येज्योपनयननियमव्रतादेशेषु ।

४०५ ईक्षँ दर्शने ।

४०६ ईषँ गतिहिंसादर्शनेषु ।

४०७ भाषँ व्यक्तायां वाचि ।

४०८ वर्षँ स्नेहने ।

४०९ गेषृँ अन्विच्छायाम् ।

४१० ग्लेषृँ इत्येके ।

४११ येषृँ प्रयत्ने ।

४१२ जेषृँ, णेषृँ, एषृँ, प्रेषृँ गतौ ।

४१३ रेषृँ, हेषृँ ह्रेषृँ अव्यक्ते शब्दे ।

४१४ कासृँ शब्दकुत्सायाम् ।

४१५ भासृँ दीप्तौ ।

४१६ णासृँ, रासृँ शब्दे ।

४१७ णसँ कौटिल्ये ।

४१८ भ्यसँ भये ।

४१९ आङः शसिँ इच्छायाम् ।

४२० ग्रसुँ, ग्लसुँ अदने ।

४२१ ईहँ चेष्टायाम् ।

४२२ बहिँ, महिँ वृद्धौ ।

४२३ अहिँ गतौ ।

४२४ गर्हँ गल्हँ कुत्सायाम् ।

४२५ बर्हँ, बल्हँ प्राधान्ये ।

४२६ वर्हँ, वल्हँ परिभाषणहिंसाऽऽच्छादनेषु ।

४२७ प्लिहँ गतौ ।

४२८ वेहृँ, जेहृँ, बाहृँ प्रयत्ने ।

४२९ द्राहृँ निद्राक्षये । निक्षेप इत्येके ।

४३० काशृँ दीप्तौ ।

४३१ ऊहँ वितर्के ।

४३२ गाहूँ विलोडने ।

४३३ गृहूँ ग्रहणे ।

४३४ ग्लहँ च ।

---

४३४ 'ग्लहुँ च' इत्यन्यत्र ।

४३५ घुषिँ कान्तिकरणे ।

उदात्ता अनुदात्तेतः ।
[ ५२ + ६३० = ६८२ ]

घुषिरादयः परस्मैभाषाः—

४३६ घुषिँर् अविशब्दने ।
४३७ अक्षूँ व्याप्तौ ।
४३८ तक्षूँ, त्वक्षूँ तनूकरणे ।
४३९ उक्षँ सेचने ।
४४० रक्षँ पालने ।
४४१ णिक्षँ चुम्बने ।
४४२ तृक्षँ, स्तृक्षँ, णक्षँ गतौ ।
४४३ वक्षँ रोषे । सङ्घात इत्येके
४४४ मृक्षँ सङ्घाते ।
४४५ म्रक्षँ इत्येके ।
४४६ तक्षँ त्वचने ।
४४७ पक्षँ परिग्रह इत्येके ।
४४८ सूर्क्ष्यँ आदरे ।
४४९ काक्षिँ, वाक्षिँ, माक्षिँ काङ्क्षायाम् ।
४५० द्राक्षिँ, ध्राक्षिँ, ध्वाक्षिँ घोरवासिते ।
४५१ चूषँ पाने ।
४५२ तूषँ तुष्टौ ।
४५३ पूषँ वृद्धौ ।
४५४ मूषँ स्तेये ।
४५५ लूषँ, रूषँ भूषायाम् ।
४५६ शूषँ प्रसवे ।
४५७ यूषँ हिंसायाम् ।
४५८ जूषँ च ।
४५९ भूषँ अलङ्कारे ।
४६० ऊषँ रुजायाम् ।
४६१ ईषँ उञ्छे ।
४६२ कषँ, खषँ, शिषँ, जषँ, झषँ, शषँ, वषँ, मषँ, रुषँ, रिषँ हिंसार्थाः ।
४६३ भषँ भर्त्सने ।
४६४ उषँ दाहे ।
४६५ जिषुँ, विषुँ, मिषुँ सेचने ।
४६६ पुषँ पुष्टौ ।
४६७ श्रिषुँ, श्लिषुँ, प्रुषुँ, प्लुषुँ दाहे ।
४६८ पृषुँ, वृषुँ, मृषुँ सेचने ।
४६९ मृषुँ सहने च । इतरौ हिंसासङ्क्लेशनयोश्च ।
४७० घृषुँ, सङ्घर्षे ।
४७१ हृषुँ अलीके ।
४७२ तुसँ, ह्रसँ, ह्लसँ, रसँ शब्दे
४७३ लसँ श्लेषणक्रीडनयोः ।
४७४ घस्लृँ अदने ।
४७५ जर्जँ, चर्चँ, झर्झँ परिभाषणहिंसावर्जनेषु ।
४७६ पिसृँ, पेसृँ गतौ ।

४४५ 'मक्षँ' इत्यधिकमन्यत्र ।

४७७ हसेँ हसने ।
४७८ णिशँ समाधौ ।
४७९ मिशँ, मशँ शब्दे रोषकृते च
४८० शवँ गतौ ।
४८१ शशँ प्लुतगतौ ।
४८२ शसुँ हिंसायाम् ।
४८३ शंसुँ स्तुतौ ।
४८४ चहँ परिकल्कने ।
४८५ महँ पूजायाम् ।
४८६ रहँ त्यागे ।
४८७ रहिँ गतौ ।
४८८ दृहँ, दृहिँ, बृहँ, बृहिँ वृद्धौ
४८९ बृहिँ शब्दे च ।
४९० बृहिँर् इत्येके ।
४९१ तुहिँर्, दुहिँर्, उहिँर्
अर्दने ।
४९२ अर्हँ पूजायाम् ।

उदात्ता उदात्तेतः ।
[ ९१ + ६८२ = ७७३ ]

द्युतादय आत्मनेभाषाः[1]—

४९३ द्युतँ दीप्तौ ।
४९४ श्वितांँ वर्णे ।
४९५ ञिमिदांँ स्नेहने ।
४९६ ञिष्विदांँ स्नेहनमोचनयोः ।
४९७ ञिक्ष्विदांँ इत्येके ।
४९८ रुचँ दीप्तावभिप्रीतौ च ।
४९९ घुटँ परिवर्तने ।
५०० रुटँ, लुटँ, लुडँ, उठँ
उपघाते ।
५०१ शुभँ दीप्तौ ।
५०२ क्षुभँ सञ्चलने ।
५०३ णभँ, तुभँ हिंसायाम् ।
५०४ स्रंसुँ, ध्वंसुँ, भ्रंसुँ अवस्रंसने
५०५ ध्वंसुँ गतौ च ।
५०६ भ्रशुँ, भ्रंशुँ अधःपतने ।
५०७ स्रम्भुँ विश्वासे ।
५०८ वृतुँ वर्तने ।
५०९ वृधुँ वृद्धौ ।
५१० शृधुँ शब्दकुत्सायाम् ।
५११ स्यन्दूँ प्रस्रवणे ।
५१२ कृपूँ सामर्थ्ये ।
५१३ वृत् ।

उदात्ता अनुदात्तेतः ।
[ २६ + ७७३ = ७९९ ]

घटादय आत्मनेभाषाः—

५१४ घटँ चेष्टायाम् ।
५१५ व्यथँ भयसञ्चलनयोः ।
५१६ प्रथँ प्रख्याने ।
५१७ प्रसँ विस्तारे ।
५१८ म्रदँ मर्दने ।

---

५००. 'प्रतीघाते' इत्यन्यत्र ।

१. द्युताद्गिणो द्युतादिगणश्च समास इत्यर्थः ।

५१९ स्खदुँ स्खदने ।
५२० क्षञ्जिँ गतिदानयोः ।
५२१ दक्षँ गतिहिंसनयोः ।
५२२ क्रपुँ कृपायां गतौ च ।
५२३ कदिँ, क्रदिँ, क्लदिँ वैक्लव्ये । वैकल्य इत्येके ।
५२४ कदुँ, क्रदुँ, क्लदुँ इत्यन्ये ।
५२५ ञित्वराँ सम्भ्रमे ।

उदात्ता अनुदात्तेतः ।
[ १६ + ७९९ = ८१५ ]

ज्वरादयः परस्मैभाषाः—

५२६ ज्वरँ रोगे ।
५२७ गडँ सेचने ।
५२८ हेडँ वेष्टने ।
५२९ वटँ, भटँ परिभाषणे ।
५३० णटँ नृतौ ।
५३१ ष्टकँ प्रतिघाते ।
५३२ चकँ तृप्तौ ।
५३३ कखेँ हसने ।
५३४ रगेँ शङ्कायाम् ।
५३५ लगेँ सङ्गे ।
५३६ ह्रगेँ, ह्लगेँ, षगेँ, ष्टगेँ संवरणे ।

---

५२१ 'दक्षँ गतिशासनयोः' इत्यन्यत्र ।
५२४ 'कदुँ' धातोः स्थाने 'कथुँ' इत्यस्य क्वचित्पाठः ।

५३७ कगेँ नोच्यते ।
५३८ अकँ, अगँ कुटिलायां गतौ
५३९ कणँ, रणँ गतौ ।
५४० चणँ, शणँ, श्रणँ दाने च ।
५४१ शणँ गतावित्यन्ये ।
५४२ श्रथँ, श्लथँ, क्रथँ, क्लथँ हिंसार्थाः ।
५४३ चनँ च ।
५४४ वनुँ च नोच्यते ।
५४५ ज्वलँ दीप्तौ ।
५४६ ह्वलँ, ह्मलँ, सञ्चलने ।
५४७ स्मृँ आध्याने ।
५४८ दॄ भये ।
५४९ नॄ नये ।
५५० श्रा पाके ।
५५१ मारणतोषणनिशामनेषु ज्ञा
५५२ कम्पने चलिः ।
५५३ छदिरूर्जने ।
५५४ जिह्वोन्मथने लडिः ।
५५५ मदीँ हर्षग्लेपनयोः ।
५५६ ध्वनँ शब्दे ।
५५७ दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्च ।
५५८ स्वनँ अवतंसने ।
५५९ घटादयो मितः ।

५६० जनी जॄष्क्नसुरञ्जोऽम-न्ताश्च ।
५६१ ज्वलह्वलह्मलनमामनुप-सर्गाद्वा ।
५६२ ग्लास्नावनुवमां च ।
५६३ न कम्यमिचमाम् ।
५६४ शमोऽदर्शने ।
५६५ यमोऽपरिवेषणे ।
५६६ स्खदिरवपरिभ्यां च ।
५६७ फणँ गतौ ।
५६८ वृत्[1] ।

उदात्ता उदात्तेतः ।
[ ४७ + ८१५ = ८६२ ]

उभयतोभाषः—

५६९ राजृँ दीप्तौ ।

उदात्तः स्वरितेत् ।
[ १ + ८६२ = ८६३ ]

भ्राजादय आत्मनेभाषाः—

५७० टुभ्राजृँ, टुभ्राशृँ, टुभ्लाशृँ दीप्तौ ।

उदात्ता अनुदात्तेतः ।
[ ३ + ८६३ = ८६६ ]

स्यमादयः परस्मैभाषाः—

५७१ स्यमुँ, स्वनँ, ध्वनँ शब्दे ।
५७२ षमँ, ष्टमँ अवैक्लव्ये ।
५७३ ज्वलँ दीप्तौ ।
५७४ चलँ कम्पने ।
५७५ जलँ घातने ।
५७६ टलँ, ट्वलँ वैक्लव्ये ।
५७७ ष्ठलँ स्थाने ।
५७८ हलँ विलेखने ।
५७९ णलँ गन्धे । बन्धन इत्येके
५८० पलँ गतौ ।
५८१ बलँ प्राणने धान्यावरोधे च
५८२ पुलँ महत्त्वे ।
५८३ कुलँ संस्त्याने बन्धुषु च ।
५८४ शलँ, हुलँ, पत्लँ गतौ ।
५८५ क्वथेँ निष्पाके ।
५८६ पथेँ गतौ ।
५८७ मथेँ विलोडने ।
५८८ टुवमँ उद्गिरणे ।
५८९ भ्रमुँ चलने ।
५९० क्षरँ सञ्चलने ॥

उदात्ता उदात्तेतः ।
[ २६ + ८६६ = ८९२ ]

षहादी आत्मनेभाषौ—

५९१ षहँ मर्षणे ।

उदात्तोऽनुदात्तेत् ।

५९२ रमुँ क्रीडायाम् ।

अनुदात्तोऽनुदात्तेत् ।
[ २ + ८९२ = ८९४ ]

---

1. घटादिर्गणः समाप्त इत्यर्थः ।

५८४ एतदनन्तरं 'हुलँ हिंसासंवरणयोश्च' इत्यधिकं धातुसूत्रं क्वचित् ।

५९२ 'रमुँ' इत्यन्यत्रानुदिदेव ।

षदादयः परस्मैभाषाः—

५९३ षद्लृँ विशरणगत्यवसादनेषु ।

५९४ शद्लृँ शातने ।

५९५ क्रुशँ आह्वाने रोदने च ।

अनुदात्ता उदात्तेतः ।

५९६ कुचँ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ।

५९७ बुधँ अवगमने ।

५९८ रुहँ बीजजन्मनि प्रादुर्भावे च

५९९ कसँ गतौ ।

६०० वृत्[1] ।

उदात्ता उदात्तेतः ।

रुहिस्त्वनुदात्तः ।

[ ७+ ८९४=९०१ ]

हिक्कादय उभयतोभाषाः—

६०१ हिक्कँ अव्यक्ते शब्दे ।

६०२ अञ्चुँ गतौ याचने च ।

६०३ अचुँ इत्येके ।

६०४ अचिँ इत्यपरे ।

६०५ टुयाचृँ याच्ञायाम् ।

६०६ रेटृँ परिभाषणे ।

६०७ चतेँ, चदेँ याचने ।

६०८ प्रोथृँ पर्याप्तौ ।

६०९ मिदृँ, मेदृँ मेधाहिंसनयोः ।

६१० मिथृँ, मेथृँ इत्येके ।

६११ मिधृँ, मेधृँ सङ्गमे च ।

६१२ णिदृँ, णेदृँ कुत्सासन्निकर्षयोः

६१३ शृधुँ, मृधुँ उन्दने ।

६१४ बुधिँर् बोधने ।

६१५ उँबुन्दिँर् निशामने ।

६१६ वेणृँ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ।

६१७ वेनृँ इत्येके ।

६१८ खनुँ अवदारणे ।

६१९ चीवृँ आदानसंवरणयोः ।

६२० चायृँ पूजानिशामनयोः ।

६२१ व्ययँ गतौ ।

६२२ दाशृँ दाने ।

६२३ भेषृँ भये । गतावित्येके ।

६२४ भ्रेषृँ, भ्लेषृँ गतौ ।

६२५ असँ गतिदीप्त्यादानेषु ।

६२६ अषँ इत्येके ।

६२७ स्पशँ बाधनस्पर्शयोः ।

६२८ लषँ कान्तौ ।

६२९ चषँ भक्षणे ।

६३० छषँ हिंसायाम् ।

६३१ झषँ आदानसंवरणयोः ।

1. ज्वलादिगणः समाप्त इत्यर्थः ।

६३२ भ्रक्षँ, भ्लक्षँ अदनें ।
६३३ भक्षँ इत्येके ।
६३४ प्लक्षँ च ।
६३५ दासृँ दानें ।
६३६ माहृँ माने ।
६३७ गुहूँ संवरणे ।

उदात्ताः स्वरितेतः ।
[ ४५+९०१ = ९४६ ]

श्रिञादय उभयतोभाषाः—

६३८ श्रिञ् सेवायाम् । उदात्तः ।
६३९ भृञ् भरणे ।
६४० हृञ् हरणे ।
६४१ धृञ् धारणे ।
६४२ कृञ् करणे ।
६४३ णीञ् प्रापणे ।

अनुदात्ताः ।
[ ६+९४६ = ९५२ ]

धेटादयः परस्मैभाषाः—

६४४ धेट् पानें ।
६४५ ग्लै, म्लै हर्षक्षये ।
६४६ द्यै न्यक्करणे ।
६४७ द्रै स्वप्ने ।
६४८ ध्रै तृप्तौ ।
६४९ ध्यै चिन्तायाम् ।
६५० रै शब्दे ।
६५१ स्त्यै, ष्ट्यै शब्दसङ्घातयोः ।
६५२ खै खदने ।
६५३ क्षै, जै, षै क्षये ।
६५४ कै, गै शब्दे ।
६५५ शै, श्रै पाके ।
६५६ पै, ओँवै शोषणे ।
६५७ ष्टै वेष्टने ।
६५८ ष्णै वेष्टने । शोभायां चेत्येके ।
६५९ दैप् शोधने ।
६६० पा पाने ।
६६१ घ्रा गन्धोपादाने ।
६६२ ध्मा शब्दाग्निसंयोगयोः ।
६६३ ष्ठा गतिनिवृत्तौ ।
६६४ म्ना अभ्यासे ।
६६५ दाण् दाने ।
६६६ ह्वृ कौटिल्ये ।
६६७ स्वृ शब्दोपतापयोः ।
६६८ स्मृ चिन्तायाम् ।
६६९ वृ संवरणे ।
६७० सृ गतौ ।
६७१ ऋ गतिप्रापणयोः ।
६७२ गृ, घृ सेचने ।

---

६६९ 'वृ संवरणे' इति क्वचित् ।

६७३ ष्वृ हूर्छने ।

६७४ स्रु गतौ ।

६७५ षु प्रसवैश्वर्ययोः ।

६७६ श्रु श्रवणे ।

६७७ ध्रु स्थैर्ये ।

६७८ दु, द्रु गतौ ।

६७९ जि, ज्रि अभिभवे ।

अनुदात्ताः ।

[ ४६ + ९५२ = ९९८ ]

ष्मिङादय आत्मनेभाषाः—

६८० ष्मिङ् ईषद्धसने ।

६८१ गुङ् अव्यक्ते शब्दे ।

६८२ गाङ् गतौ ।

६८३ उङ्, कुङ्, खुङ्, गुङ्, घुङ्, ङुङ् शब्दे ।

६८४ कुङ्, खुङ्, ग्रुङ्, ग्रुङ्, चेत्याहुरन्ये ।

६८५ च्युङ्, ज्युङ्, प्रुङ्, प्लुङ् गतौ ।

६८६ क्लुङ् चेत्येके ।

६८७ रुङ् गतिरेषणयोः ।

६८८ धृङ् अवध्वंसने ।

६८९ मेङ् प्रणिदाने ।

६९० देङ् रक्षणे ।

६९१ श्यैङ् गतौ ।

६९२ प्यैङ् वृद्धौ ।

६९३ त्रैङ् पालने ।

अनुदात्ताः ।

६९४ पूङ् पवने ।

६९५ मूङ् बन्धने ।

६९६ डीङ् विहायसागतौ ।

उदात्ताः ।

[ २८ + ९९८ = १०२६ ]

परस्मैभाषः—

६९७ तॄ प्लवनसन्तरणयोः ।

उदात्तः ।

[ १ + १०२६ = १०२७ ]

गुपादय आत्मनेभाषाः—

६९८ गुपँ गोपने ।

६९९ तिजँ निशाने ।

७०० मानँ पूजायाम् ।

७०१ बधँ बन्धने ।

उदात्ता अनुदात्तेतः ।

७०२ रभँ राभस्ये ।

७०३ डुलभँष् प्राप्तौ ।

७०४ ष्वञ्जँ परिष्वङ्गे ।

७०५ हदँ पुरीषोत्सर्गे ।

अनुदात्ता अनुदात्तेतः ।

[ ८ + १०२७ = १०३५ ]

ञिष्विदादयः परस्मैभाषाः—

७०६ ञिष्विदाँ अव्यक्ते शब्दे ।

उदात्त उदात्तेत् ।

७०७ स्कुन्दिँर् गतिशोषणयोः ।
७०८ युभँ मैथुने ।
७०९ णुमँ प्रह्वत्वे शब्दे च ।
७१० गुम्लृँ, सृप्लृँ गतौ ।
७११ यमँ उपरमे ।
७१२ तुपँ सन्तापे ।
७१३ त्यजँ हानौ ।
७१४ षञ्जँ सङ्गे ।
७१५ दृशिँर् प्रेक्षणे ।
७१६ दंशँ दशने ।
७१७ कृषँ विलेखने ।
७१८ दहँ भस्मीकरणे ।
७१९ मिहँ सेचने ।

अनुदात्ता उदात्तेतः ।
[ १५+१०३५ = १०५० ]

परस्मैभाषः—
७२० कितँ निवासे रोगापनयने च

उदात्त उदात्तेत् ।
[ १ + १०५० = १०५१ ]

दानादी उभयतोभाषौ—
७२१ दानँ खण्डने ।
७२२ शानँ तेजने ।

उदात्तौ स्वरितेतौ ।
[ २ + १०५१ = १०५३ ]

पचादय उभयतोभाषाः—
७२३ डुपचँष् पाके ।
७२४ षचँ समवाये ।
७२५ भजँ सेवायाम् ।
७२६ रञ्जँ रागे ।
७२७ शपँ आक्रोशे ।
७२८ त्विषँ दीप्तौ ।
७२९ यजँ देवपूजासङ्गतिकरण-
दानेषु ।
७३० डुवपँ बीजसन्ताने छेदने च
७३१ वहँ प्रापणे ।

अनुदात्ताः स्वरितेतः, सचतिस्तूदात्तः
[ ९ + १०५३ = १०६२ ]

परस्मैभाषः—
७३२ वसँ निवासे ।

अनुदात्त उदात्तेत् ।
[ १ + १०६२ = १०६३ ]

वेञादय उभयतोभाषाः—
७३३ वेञ् तन्तुसन्ताने ।
७३४ व्येञ् संवरणे ।
७३५ ह्वेञ् स्पर्धायां शब्दे च ।

अनुदात्ताः
[ ३ + १०६३ = १०६६ ]

७३६ वदँ व्यक्तायां वाचि ।
७३७ टुओँश्वि गतिवृद्ध्योः ।
७३८ वृत्[1] ।

उदात्तावुदात्तेतौ ।
[ २ + १०६६ = १०६८ ]

इति शब्विकरणा भ्वादयः ।

---

१. इदं वृत्करणं यजादिगणस्य समाप्तिं द्योतयति, न तु भ्वादि-गणस्य । तेनाकृतिगणो भ्वादिगणः । अतो धातुपाठेऽपठितेभ्योऽन्यगणपठितेभ्यश्च धातुभ्यः शब्विकरणस्य साधुत्वं ज्ञेयम् ।

# अदादिगणः

परस्मैभाषौ—

१ अदँ भक्षणे ।

२ हुनँ हिंसागत्योः ।

अनुदात्तावुदात्तेतौ । [ =२ ]

द्विषादय उभयतोभाषाः—

३ द्विषँ अप्रीतौ ।

४ दुहँ प्रपूरणे ।

५ दिहँ उपचये ।

६ लिहँ आस्वादने ।

अनुदात्ताः स्वरितेतः ।
[ ४+२=६ ]

आत्मनेभाषः—

७ चक्षिँङ् व्यक्तायां वाचि।
अयं दर्शनेऽपि ।

अनुदात्तोऽनुदात्तेत ।
[ १+६=७ ]

ईरादय आत्मनेभाषाः—

८ ईरँ गतौ कम्पने च ।

९ ईडँ स्तुतौ ।

१० ईशँ ऐश्वर्ये ।

११ आसँ उपवेशने ।

१२ आङः शासुँ इच्छायाम् ।

१३ वसँ आच्छादने ।

१४ कसिँ गतिशासनयोः ।

१५ कसँ इत्येके ।

१६ कशँ इत्यन्ये ।

१७ णिसिँ चुम्बने ।

१८ णिजिँ शुद्धौ ।

१९ शिजिँ अव्यक्ते शब्दे ।

२० पिजिँ वर्णे ।

२१ पृजिँ इत्येके ।

२२ वृजीँ वर्जने ।

२३ पृचीँ सम्पर्चने ।

उदात्ता अनुदात्तेतः ।
[ १६+७=२३ ]

आत्मनेभाषौ—

२४ षूङ् प्राणिगर्भविमोचने ।

२५ शीङ् स्वप्ने ।

उदात्तौ
[ २+२३=२५ ]

य्वादयः परस्मैभाषाः—

२६ यु मिश्रणेऽमिश्रणे च ।

२७ रु शब्दे ।

२८ णु स्तुतौ ।

२९ टुक्षु शब्दे ।

३० क्ष्णु तेजने ।

३१ ष्णु प्रस्रवणे ।

उदात्ताः ।
[ ६+२५=३१ ]

उभयतोभाषः—

३२ ऊर्णुञ् आच्छादने ।

उदात्तः
[ १+३१+३२ ]

द्युवादयः परस्मैभाषाः—

३३ द्यु अभिगमने ।

३४ षु प्रसवैश्वर्ययोः ।

३५ कु शब्दे ।

[ तु गतिवृद्धिहिंसासु सौत्रः ]

अनुदात्ताः ।

[ ३+३२=३५ ]

उभयतोभाषौ—

३६ ष्टुञ् स्तुतौ ।

३७ ब्रूञ् व्यक्तायां वाचि ।

अनुदात्तौ ।

[ २+३५=३७ ]

इणादयः परस्मैभाषाः, इङ् त्वात्मनेभाषः—

३८ इण् गतौ ।

३९ इङ् अध्ययने ।

४० इक् स्मरणे ।

४१ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ।

४२ या प्रापणे ।

४३ वा गतिगन्धनयोः ।

४४ भा दीप्तौ ।

४५ ष्णा शौचे ।

४६ श्रा पाके ।

४७ द्रा कुत्सायां गतौ ।

४८ प्सा भक्षणे ।

४९ पा रक्षणे ।

५० रा दाने ।

५१ ला आदाने ।

५२ दाप् लवने ।

५३ ख्या प्रकथने ।

५४ प्रा पूरणे ।

५५ मा माने ।

५६ वचँ परिभाषणे ।

अनुदात्ताः । वचिरनुदात्त उदात्तेत् ।

[ १९+३७=५६ ]

विदादयः परस्मैभाषाः—

५७ विदँ ज्ञाने ।

५८ असँ भुवि ।

५९ मृजूँष् शुद्धौ ।

६० रुदिँर् अश्रुविमोचने ।

उदात्ता उदात्तेतः ।

[ ४+५६=६० ]

परस्मैभाषः—

६१ ञिष्वपँ शये ।

अनुदात्त उदात्तेत् ।

[१+६०=६१]

श्वसादयः परस्मैभाषाः—

६२ श्वसँ प्राणने ।

६३ अनँ च ।

६४ जक्षँ भक्षहसनयोः ।

उदात्ता उदात्तेतः ।

६५ जागृ निद्राक्षये ।

६६ दरिद्रा दुर्गतौ ।

उदात्तौ ।

६७ चकासृँ दीप्तौ ।

६८ शासुँ अनुशिष्टौ ।

उदात्तावुदात्तेतौ ।
[७+६१=६८]

आत्मनेभाषौ—

६९ दीधीङ् दीप्तिदेवनयोः ।

७० वेवीङ् वेतिना तुल्ये ।

उदात्तौ ।
[ २+६८=७० ]

परस्मैभाषाः—

७१ षसँ, षसिँ स्वप्ने ।

७२ वशँ कान्तौ ।

उदात्ता उदात्तेतः ।
[३+७८=७३]

७३ चर्करीतञ्च ।

आत्मनेभाषः—

७४ ह्नुङ् अपनयने ।

अनुदात्तः
[ १+७३=७४ ]

अदादिगणस्था धातवः ७४
प्राक्तना धातवः १०६८
सम्मेल्य धातवः ११४२

इति लुग्विकरणा अदादयः

७१ 'षसँ, सस्ति स्वप्ने' इत्यन्यत्र ।

## जुहोत्यादिगणः

ह्वादयः परस्मैभाषाः—

१ हु दानादनयोः । आदाने चेत्येके

२ ञिभी भये ।

३ ह्री लज्जायाम् ।

अनुदात्ताः । [ =३ ]

परस्मैभाषः—

४ पॄ पालनपूरणयोः । ह्रस्वान्तोऽयमित्येके ।

उदात्तः । [ १+३=४ ]

उभयतोभाषः—

५ डुभृञ् धारणपोषणयोः ।

अनुदात्तः [ १+४=५ ]

आत्मनेभाषौ—

६ माङ् माने शब्दे च ।

७ ओँहाङ् गतौ ।

अनुदात्तौ । [ २+५=७ ]

परस्मैभाषः—

८ ओँहाक् त्यागे ।

उदात्तेदनुदात्तः ।
[१+७=८]

उभयतोभाषौ—

९ डुदाञ् दाने ।

१० डुधाञ् धारणपोषणयोः ।

अनुदात्तौ । [ २+८=१० ]

णिजिराद्य उभयतोभाषाः—

११ णिजिँर् शौचपोषणयोः ।

१२ विजिँर् पृथग्भावे ।

१३ विष्लृँ व्याप्तौ

अनुदात्ताः स्वरितेतः ।

[ ३+१०=१३ ]

घादयः परस्मैभाषाश्छान्दसाश्च—

१४ घृ क्षरणदीप्त्योः ।

१५ हृ प्रसह्यकरणे ।

१६ ऋ, सृ गतौ ।

अनुदात्ताः ।

१७ भसँ भर्त्सनदीप्त्योः ।

उदात्त उदात्तेत् ।

१८ कि ज्ञाने ।

अनुदात्तः ।

१९ तुरँ त्वरणे ।

२० धिषँ शब्दे ।

२१ धनँ धान्ये ।

२२ जनँ जनने ।

उदात्ता उदात्तेतः ।

२३ गा स्तुतौ ।

अनुदात्तः ।

२४ छन्दसि वृत् ।

[ ११+१३=२४ ]

| | |
|---|---|
| जुहोत्यादिगणीया धातवः | २४ |
| प्राक्तना धातवः | ११४२ |
| सम्मेल्य धातवः | ११६६ |

इति श्लुविकरणा जुहोत्यादयः ॥

## दिवादिगणः

दिवादयः परस्मैभाषाः—

१ दिवुँ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ।

२ षिवुँ तन्तुसन्ताने ।

३ स्रिवुँ गतिशोषणयोः ।

४ ष्ठिवुँ निरसने ।

५ ष्णुसुँ अदने । आदान इत्येके अदर्शन इत्यपरे ।

६ ष्णसुँ निरसने ।

७ क्नसुँ ह्वरणदीप्त्योः ।

८ व्युषँ दाहे । बकारादिरित्येके

९ प्लुषँ च ।

१० नृतीँ गात्रविक्षेपे ।

११ त्रसीँ उद्वेगे ।

१२ कुथँ पूतीभावे ।

१३ पुथँ हिंसायाम् ।

१४ गुधँ परिवेष्टने ।

१५ क्षिपँ प्रेरणे । अनुदात्तः ।

१६ पुष्पँ विकसने ।

१७ तिमँ, तीमँ, ष्टिमँ, ष्टीमँ आर्द्रीभावे ।

१८ व्रीडँ चोदने लज्जायां च ।

१९ इषँ गतौ ।

२० षहँ, षुहँ चक्यर्थे ।

२१ जॄष्, झॄष् वयोहानौ ।

उदात्ता उदात्तेतः । [ =२६ ]

आत्मनेभाषौ—

२२ षूङ् प्राणिप्रसवे ।

२३ दूङ् परितापे ।

उदात्तौ । [ २+२६=२८ ]

दीङादय आत्मनेभाषाः—

२४ दीङ् क्षये ।

२५ डीङ् विहायसा गतौ ।

२६ धीङ् आधारे ।

२७ मीङ् हिंसायाम् ।

२८ रीङ् स्रवणे ।

२९ लीङ् श्लेषणे ।

३० व्रीङ् वृणोत्यर्थे । ( वृत् ) ॥

३१ स्वादय ओदितः ।

३२ पीङ् पाने ।

३३ माङ् माने ।

३४ ईङ् गतौ ।

३५ प्रीङ् प्रीणने ।

अनुदात्ताः । डीङ् तूदात्तः ।

[ ११+२८=३९ ]

श्यतिप्रभृतयः परस्मैभाषाः—

३६ शो तनूकरणे ।

३७ छो छेदने ।

३८ षो अन्तकर्मणि ।

३९ दो अवखण्डने ।

अनुदात्ताः । [ ४+३९=४३ ]

४० जनीँ प्रादुर्भावे ।

४१ दीपीँ दीप्तौ ।

४२ पूरीँ आप्यायने ।

४३ तूरीँ गतित्वरणहिंसनयोः ।

४४ धूरीँ, गूरीँ हिंसागत्योः ।

४५ घूरीँ जूरीँ हिंसावयोहान्योः

४६ शूरीँ हिंसास्तम्भनयोः ।

४७ चूरीँ दाहे ।

४८ तपँ ऐश्वर्ये ।

४९ वावृतुँ वरणे ।

५० क्लिशँ उपतापे ।

५१ काशृँ दीप्तौ ।

५२ वाशृँ शब्दे ।

उदात्ता अनुदात्तेतः ।

तपिस्त्वनुदात्तोऽनुदात्तेत् ।

[ १५+४३=५८ ]

उभयतोभाषौ—

५३ मृषँ तितिक्षायाम् ।

५४ ईँशुचिँर् पूतीभावे ।

उदात्तौ स्वरितेतौ ।

[ २+५८=६० ]

णहादय उभयतोभाषाः—

५५ णहँ बन्धने ।

५६ रञ्जँ रागे ।

५७ शपँ आक्रोशे ।

अनुदात्ताः स्वरितेतः ।
[ ३+६० = ६३ ]

पदादय आत्मनेभाषाः—

५८ पदँ गतौ ।

५९ खिदँ दैन्ये ।

६० विदँ सत्तायाम् ।

६१ बुधँ अवगमने ।

६२ युधँ सम्प्रहारे ।

६३ अनो रुधँ कामे ।

६४ अणँ प्राणने । उदात्तः ।

६५ मनँ ज्ञाने ।

६६ युजँ समाधौ ।

६७ सृजँ विसर्गे ।

६८ लिशँ अल्पीभावे ।

अनुदात्ता अनुदात्तेतः ।
[ ११ + ६३=७४ ]

राधादयः परस्मैभाषाः—

६९ राधोऽकर्मकाद् वृद्धावेव ।

७० व्यधँ ताडने ।

७१ पुषँ पुष्टौ ।

७२ शुषँ शोषणे ।

७३ तुषँ प्रीतौ ।

७४ दुषँ वैकृत्ये ।

७५ श्लिषँ आलिङ्गने ।

७६ शकँ विभाषितो मर्षणे ।

७७ ञिष्विदाँ गात्रप्रक्षरणे ।

७८ क्रुधँ क्रोधे ।

७९ क्षुधँ बुभुक्षायाम् ।

८० शुधँ शौचे ।

८१ षिधुँ संराद्धौ ।

अनुदात्ता उदात्तेतः ।

८२ रधँ हिंसासंराध्योः ।

८३ णशँ अदर्शने ।

८४ तृपँ प्रीणने ।

८५ दृपँ हर्षमोहनयोः ।

८६ द्रुहँ जिघांसायाम् ।

८७ मुहँ वैचित्त्ये ।

८८ ष्णुहँ उद्गिरणे ।

८९ ष्णिहँ प्रीतौ ।

९० वृत्[1] ।

उदात्ता उदात्तेतः ।

तृपिदृपी त्वनुदात्तावुदात्तेतौ ।

९१ शमुँ उपशमे ।

९२ तमुँ काङ्क्षायाम् ।

९३ दमुँ उपशमे ।

९४ श्रमुँ तपसि खेदे च ।

९५ भ्रमुँ अनवस्थाने ।

१. रधादिगणः समाप्त इत्यर्थः ।

९६ क्षमूँष् सहने ।
९७ क्लमुँ ग्लानौ ।
९८ मदीँ हर्षे ।
[ इत्यष्टौ शमादयः ]
९९ असुँ प्रेरणे ।
१०० यसुँ प्रयत्ने ।
१०१ जसुँ मोक्षणे ।
१०२ तसुँ उपक्षये ।
१०३ दसुँ च ।
१०४ वसुँ स्तम्भे । वशादिरित्येके
१०५ व्युषँ विभागे । ओष्ठ्यादि-
दन्त्यान्त्यो व्युसँ इत्यन्ये ।
अयकारो वुसँ इत्यपरे ।
१०६ प्लुषँ दाहे ।
१०७ बिसँ प्रेरणे ।
१०८ कुसँ संश्लेषणे ।
१०९ बुसँ उत्सर्गे ।
११० मुसँ खण्डने ।
१११ मसीँ परिणामे ।
११२ समीँ इत्येके ।
११३ लुठँ विलोडने ।
११४ उचँ समवाये ।
११५ भृशुँ, भ्रंशुँ अधःपतने ।
११६ वृशँ वरणे ।
११७ कृशँ तनूकरणे ।
११८ ञितृषँ पिपासायाम् ।
११९ हृषँ तुष्टौ ।
१२० रुषँ, रिषँ हिंसायाम् ।
१२१ डिपँ क्षेपे ।
१२२ कुपँ क्रोधे ।
१२३ गुपँ व्याकुलत्वे ।
१२४ युपँ, रुपँ, लुपँ विमोहने ।
१२५ लुभँ गार्ध्ये ।
१२६ क्षुभँ सञ्चलने ।
१२७ णभँ, तुभँ हिंसायाम् ।
१२८ क्लिदूँ आर्द्रीभावे ।
१२९ ञिमिदाँ स्नेहने ।
१३० ञिक्ष्विदाँ स्नेहनमोचनयोः
१३१ ऋधुँ वृद्धौ ।
१३२ गृधुँ अभिकाङ्क्षायाम् ।
१३३ वृत्[1] ।

उदात्ता उदात्तेतः ।
[ ६८+७४=१४२ ]
दिवादिगणस्था धातवः १४२
प्राक्तना धातवः ११६६
सम्मेल्य धातवः १३०८
इति श्यन्विकरणा दिवादयः ॥

११२ 'लुटँ' इति पाठः क्वचित् ।

१. पुषादयः समाप्ता इत्यर्थः । दिवादिगण आकृतिगणस्तेन 'क्षीयते' 'सृग्यते' इत्यादीनां साधुत्वम् । इति केषाञ्चिन्मतम् ।

# स्वादिगणः

स्वादय उभयतोभाषाः—

१ षुञ् अभिषवे ।

२ षिञ् बन्धने ।

३ शिञ् निशाने ।

४ डुमिञ् प्रक्षेपणे ।

५ चिञ् चयने ।

६ स्तृञ् आच्छादने ।

७ कृञ् हिंसायाम् ।

८ वृञ् वरणे ।

९ धुञ् कम्पने। दीर्घान्तोपीत्येके

अनुदात्ताः । वृञ्तूदात्तः [=९]

द्वादय परस्मैभाषाः—

१० टुदु उपतापे ।

११ हि गतौ वृद्धौ च ।

१२ पृ प्रीतौ ।

१३ स्पृ प्रीतिसेवनयोः । प्रीति-चलनयोरित्यन्ये ।

१४ स्मृ इत्येके ।

अनुदात्ताः ।

१५ आप्लृँ व्याप्तौ ।

१६ शक्लृँ शक्तौ ।

१७ राधँ, साधँ संसिद्धौ ।

अनुदात्ता उदात्तेतः ।

[९+९=१८]

आत्मनेभाषौ—

१८ अशूँ व्याप्तौ सङ्घाते च ।

१९ ष्टिघँ आस्कन्दने ।

उदात्तावनुदात्तेतौ ।

[२+१८=२०]

तिकादयः परस्मैभाषाः—

२० तिकँ, तिगँ गतौ च ।

२१ षघँ हिंसायाम् ।

२२ ञिधृषाँ प्रागल्भ्ये ।

२३ दम्भुँ दम्भने ।

२४ ऋधुँ वृद्धौ ।

२५ छन्दसि ।

२६ तृपँ प्रीणन इत्येके ।

२७ अहँ व्याप्तौ ।

२८ दघँ घातने पालने च ।

२९ चमुँ भक्षणे ।

३० रि, क्षि, चिरि, जिरि, दाशृँ, दृ हिंसायाम् ।

उदात्ता उदात्तेतः ।

[१६+२०=३६]

स्वादिगणस्था धातवः ३६,

प्राक्तना धातवः १३०८

सम्मेल्य धातवः १३४४

❀ इति श्नुविकरणाः स्वादयः ❀

---

१३ 'स्पृ प्रीतिपालनयोः' इति क्वचित्

# तुदादिगणः

तुदादय उभयतोभाषाः—

१ तुदँ व्यथने ।

२ णुदँ प्रेरणे ।

३ दिशँ अतिसर्जने ।

४ भ्रस्जँ पाके ।

५ क्षिपँ प्रेरणे ।

६ कृषँ विलेखने ।

अनुदात्ताः स्वरितेतः । [=६]

परस्मैभाषः—

७ ऋषीँ गतौ ।

उदात्त उदात्तेत् ।
[१+६=७]

जुषादय आत्मनेभाषाः—

८ जुषीँ प्रीतिसेवनयोः ।

९ ओँविजीँ भयचलनयोः ।

१० ओँलजीँ, ओँलस्जीँ व्रीडायाम् ।

उदात्ता अनुदात्तेतः ।
[४+७=११]

व्रश्चादयः परस्मैभाषाः—

११ ओँव्रश्चूँ छेदने ।

१२ व्यचँ व्याजीकरणे ।

१३ उछिँ उञ्छे ।

१४ उछीँ विवासे ।

१५ ऋछँ गतीन्द्रियप्रलयमूर्त्तिभावेषु ।

१६ मिछँ उत्क्लेशे ।

१७ जर्जँ, चर्चँ, झर्झँ परिभाषणभर्त्सनयोः ।

१८ त्वचँ संवरणे ।

१९ ऋचँ स्तुतौ ।

२० उब्जँ आर्जवे ।

२१ उज्झँ उत्सर्गे ।

२२ लुभँ विमोहने ।

२३ रिफँ कत्थनयुद्धनिन्दाहिंसादानेषु ।

२४ रिहँ इत्येके ।

२५ तृपँ, तृम्पँ तृप्तौ ।

२६ तृफँ, तृम्फँ इत्येके ।

२७ तुपँ, तुम्पँ, तुफँ, तुम्फँ हिंसायाम् ।

२८ दृफँ, दृम्फँ उत्क्लेशे ।

२९ दृपँ, दृम्पँ इत्यन्ये ।

३० ऋफँ, ऋम्फँ हिंसायाम् ।

३१ गुफँ, गुम्फँ ग्रन्थे ।

३२ उभँ, उम्भँ पूरणे ।

३३ शुभँ, शुम्भँ शोभार्थे ।

३४ दृभीँ ग्रन्थे ।

३५ चृतीँ हिंसाग्रन्थनयोः ।

३६ विधँ विधाने ।

३७ जुडँ गतौ ।

३८ जुनँ इत्येके ।
३९ मृडँ सुखने ।
४० पृडँ च ।
४१ पृणँ प्रीणने ।
४२ वृणँ च ।
४३ मृणँ हिंसायाम् ।
४४ तुणँ कौटिल्ये ।
४५ पुणँ कर्मणि शुभे ।
४६ मुणँ प्रतिज्ञाने ।
४७ कुणँ शब्दोपकरणयोः ।
४८ शुनँ गतौ ।
४९ द्रुणँ हिंसागतिकौटिल्येषु ।
५० घुणँ, घूर्णँ भ्रमणे ।
५१ षुरँ ऐश्वर्यदीप्त्योः ।
५२ कुरँ शब्दे ।
५३ खुरँ छेदने ।
५४ मुरँ संवेष्टने ।
५५ क्षुरँ विलेखने ।
५६ घुरँ भीमार्थशब्दयोः ।
५७ पुरँ गमने ।
५८ वृहूँ उद्यमने ।
५९ बृहूँ इत्येके ।
६० तृहूँ, स्तृहूँ, तृंहूँ हिंसार्थाः ।
६१ इषुँ इच्छायाम् ।
६२ मिषँ स्पर्धायाम् ।
६३ किलँ श्वैत्यक्रीडनयोः ।
६४ तिलँ स्नेहे ।
६५ चिलँ वसने ।
६६ चलँ विलसने ।
६७ इलँ स्वप्नक्षेपणयोः ।
६८ विलँ संवरणे ।
६९ बिलँ भेदने ।
७० णिलँ गहने ।
७१ हिलँ भावकरणे ।
७२ शिलँ, षिलँ उञ्छे ।
७३ मिलँ श्लेषणे ।
७४ लिखँ अक्षरविन्यासे ।
७५ कुटँ कौटिल्ये ।
७६ पुटँ संश्लेषणे ।
७७ कुचँ सङ्कोचने ।
७८ गुजँ शब्दे ।
७९ गुडँ रक्षायाम् ।
८० डिपँ क्षेपे ।
८१ छुरँ छेदने ।
८२ स्फुटँ विकसने ।
८३ मुटँ आक्षेपप्रमर्दनयोः ।
८४ त्रुटँ छेदने ।
८५ तुटँ कलहकर्मणि ।
८६ चुटँ, छुटँ छेदने ।
८७ जुडँ बन्धने ।
८८ कडँ मदे ।
८९ लुटँ संश्लेषणे ।

९० लुठँ इत्येके ।
९१ कुडँ घनत्वे ।
९२ कुडँ बाल्ये ।
९३ पुडँ उत्सर्गे ।
९४ घुटँ प्रतिघाते ।
९५ तुडँ तोडने ।
९६ थुडँ, स्थुडँ संवरणे ।
९७ खुडँ, छुडँ इत्यन्ये । सङ्घात इत्यपरे ।
९८ स्फुरँ स्फुरणे ।
९९ स्फरँ इत्येके ।
१०० स्फुलँ सञ्चलने ।
१०१ स्फुडँ, चुडँ, व्रुडँ संवरणे ।
१०२ क्रुडँ, भ्रुडँ निमज्जने ।

उदात्ता उदात्तेतः ।
[ ११५+११=१२६ ]

आत्मनेभाषः—

१०३ गुरी॑ उद्यमने ।

उदात्तोऽनुदात्तेत् ।
[ १+१२६=१२७ ]

ण्वादयः परस्मैभाषाः—

१०४ णू स्तवने ।
१०५ धू विधूनने ।
१०६ गु पुरीषोत्सर्गे ।
१०७ ध्रु गतिस्थैर्ययोः ।
१०८ ध्रुवँ इत्येके ।

उदात्ताः । गु ध्रु त्वनुदात्तौ ।
ध्रुवँ उदात्त उदात्तेत् ।
[ ५+१२७=१३२ ]

कादी आत्मनेभाषौ—

१०९ कूङ् शब्दे । उदात्तः ।
११० कुङ् शब्द इत्येके ।

अनुदात्तः ।
( वृत् ) इति कुटादिगणः ।
[ २+१३२=१३४ ]

आत्मनेभाषौ—

१११ पृङ् व्यायामे ।
११२ मृङ् प्राणत्यागे ।

अनुदात्तौ [२+१३४=१३६]

रियत्यादयः परस्मैभाषाः—

११३ रि, पि गतौ ।
११४ धि धारणे ।
११५ क्षि निवासगत्योः ।

अनुदात्ताः ।

११६ षू प्रेरणे ।
११७ कॄ विक्षेपे ।
११८ गॄ निगरणे ।

उदात्ताः ।
[ ७+१३६=१४३ ]

आत्मनेभाषौ—

११९ दृङ् आदरे ।
१२० धृङ् अवस्थाने ।

अनुदात्तौ ।
[ २+१४३=१४५ ]

---

९० 'लुडँ' इति पाठः क्वचित् ।

प्रछादयः परस्मैभाषाः—

१२१ प्रछँ ज्ञीप्सायाम् ।

१२२ वृत् ।

( इति किरादयः )

१२३ सृजँ विसर्गे ।

१२४ टुमस्जोँ शुद्धौ ।

१२५ रुजोँ भङ्गे ।

१२६ भुजोँ कौटिल्ये ।

१२७ छुपँ स्पर्शे ।

१२८ रुशँ, रिशँ हिंसायाम् ।

१२९ लिशँ गतौ ।

१३० स्पृशँ स्पर्शने ।

१३१ विछँ गतौ ।

१३२ विशँ प्रवेशने ।

१३३ मृशँ आमर्शने ।

१३४ णुदँ प्रेरणे ।

१३५ षद्लँ विशरणगत्यवसादनेषु ।

१३६ शद्लँ शातने ।

अनुदात्ता उदात्तेतः ।

विछिस्तूदात्त उदात्तेत् ।

[ १६ + १४५ = १६१ ]

मिलादय उभयतोभाषाः—

१३७ मिलँ सङ्गमे ।

१३८ मुच्लृँ मोचने ।

१३९ लुप्लृँ छेदने ।

१४० विद्लृँ लाभे ।

१४१ लिपँ उपदेहे ।

१४२ षिचँ क्षरणे ।

अनुदात्ताः स्वरितेतः ।

मिलिविदी तूदात्तौ स्वरितेतौ ।

[ ६ + १६१ = १६७ ]

कृतादयः परस्मैभाषाः—

१४३ कृतीँ छेदने ।

१४४ खिदँ परिघातने ।

१४५ पिशँ अवयवे ।

कृतिपिशी उदात्तावुदात्तेतौ ।

खिदिस्त्वनुदात्त उदात्तेत् ॥

[ ३ + १६७ = १७० ]

१४६ वृत्[1] ।

इति शविकरणास्तुदादयः ॥

| | |
|---|---|
| तुदादिगणस्था धातवः | १७० |
| प्राक्तना धातवः | १३४४ |
| सम्मेल्य धातवः | १५१४ |

---

१ तुदादिगणः समाप्त इत्यर्थः ।

# रुधादिगणः

रुधादय उभयतोभाषाः—

१ रु॒धि॑ँर् आवरणे ।
२ भि॒दि॑ँर् विदारणे ।
३ छि॒दि॑ँर् द्वैधीकरणे ।
४ रि॒चि॑ँर् विरेचने ।
५ वि॒चि॑ँर् पृथग्भावे ।
६ क्षु॒दि॑ँर् सम्पेषणे ।
७ यु॒जि॑ँर् योगे ।
८ उ॑ँच्छृ॒दि॑ँर् दीप्तिदेवनयोः ।
९ उ॑ँतृ॒दि॑ँर् हिंसानादरयोः ।

अनुदात्ताः स्वरितेतः ।
छृदितृदी तूदात्तौ स्वरितेतौ [=९]

परस्मैभाषः—

१० कृती॑ँ वेष्टने ।

उदात्त उदात्तेत् ।
[ १+९=१० ]

आत्मनेभाषः—

११ ञि॒इन्धी॑ँ दीप्तौ ।

उदात्तोऽनुदात्तेत् ।
[ १+१०=११ ]

आत्मनेभाषौ—

१२ खि॒दु॑ँ दैन्ये ।
१३ वि॒दु॑ँ विचारणे ।

अनुदात्तावनुदात्तेतौ
[ २+११=१३ ]

शिषादयः परस्मैभाषाः—

१४ शि॒ष्लृ॑ँ विशेषणे ।
१५ पि॒ष्लृ॑ँ सञ्चूर्णने ।
१६ भ॒ञ्जो॑ँ आमर्दने ।
१७ भु॒जँ पालनाऽभ्यवहारयोः ।

अनुदात्ता उदात्तेतः ।

१८ तृहँ, हिसिँ हिंसायाम् ।
१९ उन्दी॑ँ क्लेदने ।
२० अञ्जूँ व्यक्तिम्रक्षणकान्तिगतिषु ।
२१ तञ्चूँ सङ्कोचने ।
२२ ओ॑ँविजी॑ँ भयचलनयोः ।
२३ वृजी॑ँ वर्जने ।
२४ पृची॑ँ सम्पर्के ।
२५ वृत् ।

उदात्ता उदात्तेतः ।
[ १२+१३=२५ ]

इति श्नम्विकरणा रुधादयः ॥

रुधादिगणस्थाः २५
प्राक्तना धातवः १५१४
सम्मेल्य धातवः १५३९

# तनादिगणः

तनादय उभयतोभाषाः—

१ तनुँ विस्तारे ।

२ षणुँ दाने ।

३ क्षणुँ हिंसायाम् ।

४ क्षिणुँ च ।

५ ऋणुँ गतौ ।

६ तृणुँ अदने ।

७ घृणुँ दीप्तौ ।

उदात्ताः स्वरितेतः [=७]

आत्मनेभाषौ—

८ वनुँ याचने ।

९ मनुँ अवबोधने ।

उदात्तावनुदात्तेतौ ।

[२+७=९]

उभयतोभाषः—

१० डुकृञ् करणे ।

अनुदात्तः ।

११ वृत् ।

[१+९=१०]

इत्युविकरणास्तनादयः ॥

तनादिगणस्था धातवः १०

प्राक्तना धातवः १५३९

सम्मेल्य धातवः १५४९

—:※:—

# क्र्यादिगणः

क्र्यादय उभयतोभाषाः—

१ डुक्रीञ् द्रव्यविनिमये ।

२ प्रीञ् तर्पणे कान्तौ च ।

३ श्रीञ् पाके ।

४ मीञ् हिंसायाम् ।

५ षिञ् बन्धने ।

६ स्कुञ् आप्रवणे ।

७ युञ् बन्धने ।

अनुदात्ताः ।

[=७]

क्नूञादय उभयतोभाषाः—

८ क्नूञ् शब्दे ।

९ द्रूञ् हिंसायाम् ।

१० पूञ् पवने ।

११ मूञ् बन्धने ।

१२ लूञ् छेदने ।

१३ स्तॄञ् आच्छादने ।

१४ कॄञ् हिंसायाम् ।

१५ वॄञ् वरणे ।

१६ धूञ् कम्पने ।

उदात्ताः । [९+७=१६]

११ सूत्रमिदं क्वचिन्नोपलभ्यते ।

शादयः परस्मैभाषाः—

१७ शॄ हिंसायाम् ।

१८ पॄ पालनपूरणयोः ।

१९ वॄ वरणे । भरण इत्येके ।

२० भॄ भर्त्सने । भरण इत्यन्ये ।

२१ मॄ हिंसायाम् ।

२२ दॄ विदारणे ।

२३ धॄ इत्यन्ये ।

२४ जॄ वयोहानौ ।

२५ झॄ इत्येके ।

२६ नॄ नये ।

२७ कॄ हिंसायाम् ।

२८ ऋॄ गतौ ।

२९ गॄ शब्दे ।

उदात्ताः ।
[ १३+१६=२९ ]

ज्यादयः परस्मैभाषाः—

३० ज्या वयोहानौ ।

३१ री गतिरेषणयोः ।

३२ ली श्लेषणे ।

३३ व्ली वरणे ।

३४ प्ली गतौ ।

३५ वृत्[1] ।

३६ व्री वरणे ।

३७ भ्री भये । भरण इत्येके ।

३८ क्षीष् हिंसायाम् ।

३९ ज्ञा अवबोधने ।

४० बुन्धँ बन्धने ।

अनुदात्ताः । 'बन्धँ' अनुदात्त उदात्तेत् ।
[ १०+२९=३९ ]

आत्मनेभाषः—

४१ वृङ् सम्भक्तौ ।

उदात्तः ।
[ १+३९=४० ]

श्रन्थादयः परस्मैभाषाः—

४२ श्रन्थँ विमोचनप्रतिहर्षयोः ।

४३ मन्थँ विलोडने ।

४४ श्रन्थँ, ग्रन्थँ सन्दर्भे ।

४५ कुन्थँ संश्लेषणे ।

४६ मृदँ क्षोदे ।

४७ मृडँ च । अयं सुखेऽपि ।

४८ गुधँ रोषे ।

४९ कुषँ निष्कर्षे ।

५० क्षुभँ सञ्चलने ।

५१ णभँ, तुभँ हिंसायाम् ।

---

२१ अत्र 'स्तॄ, स्वॄ' इति धातू अधिकौ क्वचित् ।

१. वृत्करणं ल्वादीनां समाप्तिं द्योतयति । अनेन केचन प्वादीनामपि समाप्ति-म्मन्यन्तेऽन्ये ल्वाऽऽगणान्तम्प्वादय इति मन्वते ।

५२ क्लिशूँ विबाधने ।
५३ अशँ भोजने ।
५४ उँध्रसँ उञ्छे ।
५५ इषँ आभीक्ष्ण्ये ।
५६ विषँ विप्रयोगे । अनुदात्तः ।
५७ प्रुषँ, प्लुषँ स्नेहनमोचनपूरणेषु
५८ पुषँ पुष्टौ ।
५९ मुषँ स्तेये ।
६० खचँ भूतप्रादुर्भावे ।
६१ खवँ इत्येके ।
६२ हेठँ च ।

उदात्ता उदात्तेतः ।
[ २३+४०=६३ ]

उभयतोभाषः—
६३ ग्रहँ उपादाने ।

उदात्तः स्वरितेत् ।

६४ वृत् ।

[ १+६३=६४ ]

इति श्नाविकरणाः क्र्यादयः ॥

क्र्यादिगणस्था धातवः ६४
प्राक्तना धातवः १५४९
सम्मेल्य धातवः १६१३

५४. अत्राद्यमुकारमनुनासिकं नैव मन्यन्ते केचन । इत्सञ्ज्ञाया अभावादुकारो धात्ववयवस्तेषां मते ।

## चुरादिगणः

चुरादयः परस्मैभाषाः—
१ चुरँ स्तेये ।
२ चितिँ स्मृत्याम् ।
३ यत्रिँ सङ्कोचने ।
४ स्फुडिँ परिहासे । स्फुटिँ इत्येके ।
५ लक्षँ दर्शनाङ्कनयोः ।
६ कुद्रिँ अनृतभाषणे ।
७ लडँ उपसेवायाम् ।
८ मिदिँ स्नेहने ।
९ ओलडिँ उत्क्षेपणे । उकारादिरित्यन्ये ।
१० जलँ अपवारणे ।
११ लजँ इत्येके ।
१२ पीडँ अवगाहने ।
१३ नटँ अवस्पन्दने ।
१४ श्रथँ प्रयत्ने । प्रस्थान इत्येके ।
१५ बधँ संयमने ।
१६ पॄ पूरणे ।
१७ ऊर्जँ बलप्राणनयोः ।
१८ पक्षँ परिग्रहे ।
१९ वर्णँ, चूर्णँ प्रेरणे ।
२० वर्णँ वर्णन इत्येके ।

९. ओकारोऽनुनासिकः केषाञ्चिन्मते ।

१३. 'अवस्यन्दने' इति क्वचित् ।
१४. 'प्रतियत्ने' 'प्रतिहर्षे' चायं क्वचित् ।

२१ प्रथँ प्रख्याने ।
२२ पृथँ प्रक्षेपे ।
२३ पथँ इत्येके ।
२४ षम्बँ सम्बन्धने ।
२५ शम्बँ च ।
२६ साम्बँ इत्येके ।
२७ भक्षँ अदने ।
२८ कुट्टँ छेदनभर्त्सनयोः । पूरण इत्येके ।
२९ पुट्टँ, चुट्टँ अल्पीभावे ।
३० अट्टँ, शुट्टँ अनादरे ।
३१ लुण्ठँ स्तेये ।
३२ शठँ, श्वठँ असंस्कारगत्योः ।
३३ श्वठिँ इत्येके ।
३४ तुजँ, तुजिँ, पिजँ, पिजिँ, लजिँ, लुजिँ हिंसाबलादाननिकेतनेषु ।
३५ पिसँ गतौ ।
३६ षान्त्वँ सामप्रयोगे ।
३७ श्वल्कँ, वल्कँ परिभाषणे ।
३८ ष्णिहँ स्नेहने ।
३९ स्फिटँ इत्येके ।
४० स्मिटँ अनादरे ।
४१ ष्मिङ् इत्येके ।
४२ श्लिषँ श्लेषणे ।
४३ पथिँ गतौ ।
४४ पिछँ कुट्टने ।
४५ छदिँ संवरणे ।
४६ श्रणँ दाने ।
४७ तडँ आघाते ।
४८ खडँ, खडिँ, कडिँ भेदने ।
४९ कुडिँ रक्षणे ।
५० गुडिँ वेष्टने । रक्षण इत्येके ।
५१ कुठिँ, गुठिँ चेत्यन्ये ।
५२ खुडिँ खण्डने ।
५३ वटिँ विभाजने ।
५४ वडिँ इत्येके ।
५५ चडिँ कोपे ।
५६ मडिँ भूषायां हर्षे च ।
५७ भडिँ कल्याणे ।
५८ छर्दँ वमने ।
५९ पुस्तँ, बुस्तँ आदरानादरयोः ।
६० चुदँ सञ्चोदने ।
६१ नक्कँ, धक्कँ नाशने ।
६२ चक्कँ, चुक्कँ व्यथने ।
६३ क्षलँ शौचकर्मणि ।
६४ तलँ प्रतिष्ठायाम् ।
६५ तुलँ उन्माने
६६ दुलँ उत्क्षेपे ।
६७ पुलँ महत्त्वे ।
६८ चुलँ समुच्छ्राये ।
६९ मूलँ रोहणे ।

७० बुलँ निमज्जने ।
७१ कलँ, विलँ क्षेपे ।
७२ बिलँ भेदने ।
७३ तिलँ स्नेहने ।
७४ चलँ भृतौ ।
७५ पालँ रक्षणे ।
७६ लूषँ हिंसायाम् ।
७७ शुल्बँ माने ।
७८ शूर्पँ च ।
७९ चुटँ छेदने ।
८० मुटँ सञ्चूर्णने ।
८१ पडिँ, पसिँ नाशने ।
८२ व्रजँ मार्गसंस्कारगत्योः ।
८३ शुल्कँ अतिस्पर्शने ।
८४ चपिँ गत्याम् ।
८५ क्षपिँ क्षान्त्याम् ।
८६ क्षजिँ कृच्छ्रजीवने ।
८७ श्वर्तँ गत्याम् ।
८८ श्वभ्रँ च ।
८९ ज्ञपँ मिच्च ।
९० यमँ च परिवेषणे ।
९१ चहँ परिकल्कने ।
९२ चपँ इत्येके ।
९३ रहँ त्यागे ।
९४ बलँ प्राणने ।
९५ चिञ् चयने ।
९६ नान्ये मितोऽहेतौ ।
९७ घट्टँ चलने ।
९८ मुस्तँ सङ्घाते ।
९९ खट्टँ संवरणे ।
१०० षट्टँ, स्फुट्टँ, चुबिँ हिंसायाम्
१०१ पूलँ सङ्घाते ।
१०२ पूणँ इत्येके ।
१०३ पुंसँ अभिवर्धने ।
१०४ टकिँ बन्धने ।
१०५ धूसँ कान्तिकरणे ।
१०६ धूषँ इत्येके ।
१०७ धूशँ इत्यपरे ।
१०८ कीटँ वरणे ।
१०९ चूर्णँ सङ्कोचने ।
११० पूजँ पूजायाम् ।
१११ अर्कँ स्तवने । तपन इत्येके ।
११२ शुठँ आलस्ये ।
११३ शुठिँ शोषणे ।
११४ जुडँ प्रेरणे ।
११५ गजँ, मार्जँ शब्दार्थौ ।
११६ मर्चँ च ।
११७ घृ प्रस्रवणे ।
११८ पचिँ विस्तारवचने ।
११९ तिजँ निशाने ।

---

७० सूत्रमिदमन्यत्र न दृश्यते ।

९८ 'अस्त सङ्घाते' इति क्वचित् ।

१२० कृतँ संशब्दे ।
१२१ वर्धँ छेदनपूरणयोः ।
१२२ कुबिँ आच्छादने ।
१२३ कुभिँ इत्येके ।
१२४ लुबिँ, तुबिँ अदर्शने । अर्दन इत्येके ।
१२५ ह्लपँ व्यक्तायां वाचि ।
१२६ क्लपँ इत्येके ।
१२७ चुटिँ छेदने ।
१२८ इलँ प्रेरणे ।
१२९ म्रछँ म्लेच्छने ।
१३० म्लेछँ अव्यक्तायां वाचि ।
१३१ ब्रूसँ, बर्हँ हिंसायाम् ।
१३२ गर्जँ, गर्दँ शब्दे ।
१३३ गर्धँ अभिकाङ्क्षायाम् ।
१३४ गुर्दँ, पुर्वँ निकेतने ।
१३५ जसिँ रक्षणे। मोक्षण इत्येके
१३६ ईडँ स्तुतौ ।
१३७ जसुँ हिंसायाम् ।
१३८ पिडिँ सङ्घाते ।
१३९ रुषँ रोषे ।
१४० रुटँ इत्येके ।
१४१ डिपँ क्षेपे ।
१४२ ष्टुपँ समुच्छ्राये ।

उदात्ता उदात्तेतः [=१६४]

चितादय आत्मनेभाषाः—

१४३ चितँ सञ्चेतने ।
१४४ दशिँ दंशनदर्शनयोः ।
१४५ दसुँ, दसिँ इत्येके ।
१४६ डपँ, डिपँ सङ्घाते ।
१४७ तत्रिँ कुटुम्बधारणे ।
१४८ मत्रिँ गुप्तपरिभाषणे ।
१४९ स्पशँ ग्रहणसंश्लेषणयोः ।
१५० तर्जँ, भर्त्सँ तर्जने ।
१५१ बस्तँ, गन्धँ अर्दने ।
१५२ विष्कँ हिंसायाम् ।
१५३ हिष्कँ इत्येके ।
१५४ निष्कँ परिमाणे ।
१५५ ललँ ईप्सायाम् ।
१५६ कूणँ सङ्कोचने ।
१५७ तूणँ पूरणे ।
१५८ भ्रूणँ आशाविशङ्कयोः ।
१५९ शठँ श्लाघायाम् ।
१६० यक्षँ पूजायाम् ।
१६१ स्यमँ वितर्के ।
१६२ गूरँ उद्यमने।
१६३ शमँ, लक्षँ आलोचने ।
१६४ कुत्सँ अवक्षेपणे ।
१६५ त्रुटँ छेदने ।
१६६ कुटँ इत्येके ।
१६७ गलँ स्रवणे ।

---
१४२ 'ष्टूपँ समुच्छ्राये' इति क्वचित् ।

१६८ भलँ आभण्डने ।
१६९ कूटँ आप्रदाने । अवसादन इत्येके ।
१७० कुट्टँ प्रतापने ।
१७१ वञ्चुँ प्रलम्भने ।
१७२ वृषँ शक्तिबन्धने ।
१७३ मदँ तृप्तियोगे ।
१७४ दिवुँ परिकूजने ।
१७५ गॄ विज्ञाने ।
१७६ विदँ चेतनाख्याननिवासेषु ।
१७७ मनँ स्तम्भे ।
१७८ यु जुगुप्सायाम् ।
१७९ कुस्मँ नाम्नो वा ।

उदात्ता अनुदात्तेतः ।
[ ४२ + १६४ = २०६ ]

चर्चादयः परस्मैभाषाः—

१८० चर्चँ अध्ययने ।
१८१ बुक्कँ भाषणे ।
१८२ शब्दँ उपसर्गादाविष्कारे च
१८३ कणँ निमीलने ।
१८४ जभिँ नाशने ।
१८५ षूदँ क्षरणे ।
१८६ जसुँ ताडने ।
१८७ पशँ बन्धने ।
१८८ अमँ रोगे ।
१८९ चटँ, स्फुटँ भेदने ।
१९० घटँ सङ्घाते ।
१९१ हन्त्यर्थाश्च ।
१९२ दिवुँ मर्दने ।
१९३ अर्जँ प्रतियत्ने ।
१९४ घुषिँर् विशब्दने ।
१९५ आङः क्रन्दँ सातत्ये ।
१९६ लसँ शिल्पयोगे ।
१९७ तसिँ, भूषँ अलङ्कारे ।
१९८ अर्हँ पूजायाम् ।
१९९ ज्ञा नियोगे ।
२०० भजँ विश्राणने ।
२०१ शृधुँ प्रसहने ।
२०२ यतँ निकारोपस्कारयोः ।
२०३ कलँ, गलँ आस्वादने ।
२०४ रघँ इत्येके ।
२०५ रगँ इत्यन्ये ।
२०६ अञ्चुँ विशेषणे ।
२०७ लिगिँ चित्रीकरणे ।
२०८ मुदँ संसर्गे ।
२०९ त्रसँ धारणग्रहणवारणेषु ।
२१० उँध्रसँ उञ्छे ।
२११ मुचँ प्रमोचनमोदनयोः ।
२१२ वसँ स्नेहच्छेदापहरणेषु ।

---

१८१. 'बुक्कँ भषणे' इति क्वचित् ।

१९८. एतत्सूत्रात्प्राक् 'मोक्षँ असने' इति धातुसूत्रं क्वचित् ।

२०३. 'रकँ, लगँ आस्वादने' इति क्वचित्

२१०. नानुनासिक आद्य उकार इतिकेचन तेषाम्मते उध्रासयतीत्यादि रूपं बोध्यम् ।

२१३ चरँ संशये ।
२१४ च्यु हसने । सहन इत्येके ।
२१५ च्युसँ इत्येके ।
२१६ भुवो ँ अवकल्कने ।
२१७ क्रुपेश्च ।

उदात्ता उदात्तेतः ।
[ ४० + २०६ = २४६ ]

ग्रसादयः परस्मैभाषाः—

२१८ आस्वदः सकर्मकात् ।
२१९ ग्रसँ ग्रहणे ।
२२० पुषँ धारणे ।
२२१ दलँ विदारणे ।
२२२ पटँ, पुटँ, लुटँ, तुजिँ, मिजिँ, पिजिँ, लुजिँ, भजिँ, लघिँ, त्रसिँ, पिसिँ, कुसिँ, दशिँ, कुशिँ, घटँ, घटिँ, बृहिँ, बर्हँ, बल्हँ, गुपँ, धूपँ, विछँ, चीवँ, पुथँ, लोकृँ, लोचृँ, णदँ, कुपँ, तर्कँ, वृतुँ, वृधुँ भाषार्थाः[1] ।
२२३ रुटँ, लजिँ, अजिँ, दसिँ, भृशिँ, रुशिँ, शीकँ, नटँ, पुटिँ, जिविँ, रघिँ लघिँ, अहिँ, रहिँ, महिँ च ।
२२४ लडिँ, तडँ, नलँ च ।
२२५ पूरीँ आप्यायने ।
२२६ रुजँ हिंसायाम् ।
२२७ ष्वदँ आस्वादने ।
२२८ स्वादँ इत्येके ।

उदात्ता उदात्तेतः ।
[ ५५ + २४६ = ३०१ ]

युजादयः परस्मैभाषाः—

२२९ आधृषाद्वा ।
२३० युजँ, पृचँ संयमने ।
२३१ अर्चँ पूजायाम् ।
२३२ षहँ मर्षणे ।
२३३ ईरँ क्षेपे ।
२३४ ली द्रवीकरणे ।
२३५ वृजीँ वर्जने ।
२३६ वृञ् आवरणे ।
२३७ जॄ वयोहानौ ।
२३८ ज्रि च ।
२३९ रिचँ वियोजनसम्पर्चनयोः ।
२४० शिषँ असर्वोपयोगे ।
२४१ तपँ दाहे ।
२४२ तृपँ तृप्तौ ।
२४३ छृदीँ सन्दीपने ।
२४४ चृपँ, छृपँ, तृपँ, दृपँ सन्दीपन इत्येके ।
२४५ दृभीँ भये ।
२४६ दृभँ सन्दर्भे ।
२४७ छदँ संवरणे ।
२४८ श्रथँ मोक्षणे । हिंसायामित्येके ।

---
२१७. 'क्लृपेश्च' इति पाठः क्वचित् ।
१. 'भासार्थाः' इति केषाञ्चिन्मतेन ।

२४९ मी गतौ ।
२५० ग्रन्थँ बन्धने ।
२५१ क्रथँ हिंसायाम् ।
स्वरितेदित्येके ।
२५२ शीकँ आमर्षणे ।
२५३ चीकँ च ।
२५४ अर्दँ हिंसायाम् । स्वरितेत् ।
२५५ हिसिँ हिंसायाम् ।
२५६ अर्हँ पूजायाम् ।
२५७ आङः षदँ पद्यर्थे ।
२५८ शुन्धँ शौचकर्मणि ।
२५९ छदँ अपवारणे । स्वरितेत् ।
२६० जुषँ परितर्कणे ।
२६१ धूञ् कम्पने ।
२६२ प्रीञ् तर्पणे ।
२६३ श्रन्थँ, ग्रन्थँ सन्दर्भे ।
२६४ आप्लृँ लम्भने ।
स्वरितेदित्येके ।
२६५ तनुँ श्रद्धोपकरणयोः ।
उपसर्गाच्च दैर्घ्ये ।
२६६ चनँ श्रद्धोपहननयोरित्येके ।
२६७ वदँ सन्देशवचने । स्वरितेत् ।
२६८ वचँ परिभाषणे ।
२६९ मानँ पूजायाम् ।
२७० भू प्राप्तावात्मनेपदी ।
२७१ गर्हँ विनिन्दने ।
२७२ मार्गँ अन्वेषणे ।
२७३ कठिँ शोके ।
२७४ मृजूँ शौचालङ्कारयोः ।
२७५ मृषँ तितिक्षायाम् ।
स्वरितेत् ।
२७६ धृषँ प्रसहने ।
इत्याधृषीयाः ।
उदात्ता उदात्तेतः ।
[ ४९ + ३०१ = ३५० ]

कथादयः परस्मैभाषाः—
२७७ अथादन्ताः ।
२७८ कथ वाक्यप्रबन्धे ।
२७९ वर ईप्सायाम् ।
२८० गण सङ्ख्याने ।
२८१ शठ, श्वठ सम्यगवभाषणे ।
२८२ पट, वट ग्रन्थे ।
२८३ रह त्यागे ।
२८४ स्तन गदी देवशब्दे ।
२८५ पत गतौ वा ।
२८६ पष अनुपसर्गात् ।
२८७ स्वर आक्षेपे ।
२८८ रच प्रतियत्ने ।
२८९ कल गतौ सङ्ख्याने च ।
२९० चह परिकल्कने ।
२९१ मह पूजायाम् ।
२९२ सार, कृप, श्रथ दौर्बल्ये ।
२९३ स्पृह ईप्सायाम् ।
२९४ भाम क्रोधे ।
२९५ सूच पैशुन्ये ।

२९६ खेट भक्षणे ।
२९७ खेड इत्येके ।
२९८ खोट इत्यन्ये ।
२९९ क्षोट क्षेपे ।
३०० गोम उपलेपने ।
३०१ कुमार क्रीडायाम् ।
३०२ शील उपधारणे ।
३०३ साम सान्त्वप्रयोगे ।
३०४ वेल कालोपदेशे ।
काल पृथग्धातुरित्येके ।
३०५ पल्पूल लवनपवनयोः ।
३०६ वात सुखसेवनयोः । गति-सुखसेवनेष्विन्त्येके ।
३०७ गवेष मार्गणे ।
३०८ वास उपसेवायाम् ।
३०९ निवास आच्छादने ।
३१० भाज पृथक्कर्मणि ।
३११ सभाज प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके ।
३१२ ऊन परिहाणे ।
३१३ ध्वन शब्दे ।
३१४ कूट परितापे । परिदाह इत्यन्ये ।
३१५ सङ्केत, ग्राम, कुण, गुण चामन्त्रणे ।
३१६ कूण सङ्कोचने ।
३१७ स्तेन चौर्ये ।
३१८ आगर्वीदात्मनेपदिनः—
३१९ पद गतौ ।
३२० गृह ग्रहणे ।
३२१ मृग अन्वेषणे ।
३२२ कुह विस्मापने ।
३२३ शूर, वीर विक्रान्तौ ।
३२४ स्थूल परिबृंहणे ।
३२५ अर्थ उपयाच्ञायाम् ।
३२६ सत्र सन्तानक्रियायाम् ।
३२७ गर्व माने । इत्यागर्वीयाः ।
३२८ सूत्र वेष्टने । विमोचन इत्यन्ये
३२९ मूत्र प्रस्रवणे ।
३३० रूक्ष पारुष्ये ।
३३१ पार, तीर कर्मसमाप्तौ ।
३३२ पुट संसर्गे ।
३३३ धेक दर्शन इत्येके ।
३३४ कत्र शैथिल्ये ।
३३५ कर्त इत्यप्येके ।
३३६ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ।
३३७ तत्करोतीति ।
३३८ तदाचष्टे ।
३३९ तेनातिक्रामति ।
३४० धातुरूपञ्च ।
३४१ कर्तृकरणाद्धात्वर्थे ।
३४२ वष्क दर्शने ।
३४३ चित्र चित्रीकरणे । कदाचिद्दर्शने ।

३४४ अंस समाघाते ।
३४५ वट विभाजने ।
३४६ लज प्रकाशने ।
३४७ वटिँ, लजिँ इत्येके ।
३४८ मिश्र सम्पर्के ।
३४९ सङ्ग्रामँ युद्धे ।
अयमनुदात्तेत् ।
३५० स्तोम श्लाघायाम् ।
३५१ छिद्र कर्णभेदने । करणभेदने इत्येके । कर्ण धात्वन्तरमित्येके ।
३५२ अन्ध दृष्ट्युपघाते । उपसंहार इत्यन्ये ।
३५३ दण्ड दण्डनिपातने ।
३५४ अङ्क पदे लक्षणे च ।
३५५ अङ्ग च ।
३५६ सुख, दुःख तत्क्रियायाम् ।
३५७ रस आस्वादनस्नेहनयोः ।
३५८ व्यय वित्तसमुत्सर्गे ।
३५९ रूप रूपक्रियायाम् ।
३६० छेद द्वैधीकरणे ।
३६१ छद अपवारण इत्येके ।
३६२ लाभ प्रेरणे ।
३६३ व्रण गात्रविचूर्णने ।
३६४ वर्ण क्रियाविस्तारगुणवचनेषु
३६५ बहुतमेतन्निदर्शनम् ।
[ पर्ण हरितभावे ।
विष्क दर्शने ।
क्षप प्रेरणे ।
वस निवासे ।
तुत्थ आवरणे । ]
३६६ णिङ्गान्निरसने ।
३६७ श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ।
३६८ पुच्छादिषु धात्वर्थ इत्येव सिद्धम् ।
[ ९१ + ३५० = ४४१ ]
इति चुरादयः ॥

| | |
|---|---|
| चुरादिगणस्था धातवः | ४४१ |
| प्राक्तना धातवः | १६१३ |
| सम्मेल्य धातवः | २०५४ |

## कण्ड्वादिगणः

१ कण्डूञ् गात्रविघर्षणे ।
२ मन्तु अपराधे ।
३ वल्गु पूजामाधुर्ययोः ।
४ असु उपतापे ।
५ असू, असूञ् इत्येके ।
६ लेट्, लोट्, पूर्वभावे स्वप्ने च
७ लेला दीप्तौ ।
८ इरस्, इरज्, इरञ् ईर्ष्यायाम्
९ इयस् ऐश्वर्ये ।
१० उषस् प्रभातभावे ।
११ वेद धौर्त्ये स्वप्ने च ।

४. अत्र 'मनस्' इति धातुः क्वचिदधिकः ।
६ 'धौर्त्ये' इत्यधिकोऽर्थनिर्देशः क्वचित्
११ 'प्रभाते' इत्यधिकोऽर्थनिर्देशः क्वचित्

१२ मेधा आशुग्रहणे ।
१३ कुषुभ क्षेपे ।
१४ मगध परिवेष्टने । नीचदास्य इत्यन्ये ।
१५ तन्तस्, पम्पस् दुःखे ।
१६ सुख, दुःख तत्क्रियायाम् ।
१७ सपर पूजायाम् ।
१८ अरर आराकर्मणि ।
१९ भिषज् चिकित्सायाम् ।
२० भिष्णज् उपसेवायाम् ।
२१ इषुध शरधारणे ।
२२ चरण, वरण गतौ ।
२३ चुरण चौर्ये ।
२४ तुरण त्वरायाम् ।
२५ भुरण धारणपोषणयोः ।
२६ गद्गद वाक्स्खलने ।
२७ एला, केला, खेला विलासे ।

१८ 'अररु क्रूरकर्मणि' इति क्वचित् ।
२० 'विषज् उपसेवायाम्' इति क्वचित् ।

२८ इला इत्यन्ये ।
२९ खेला स्खलने च ।
३० लिट अल्पकुत्सनयोः ।
३१ लाट जीवने ।
३२ हृणीङ् रोषणे लज्जायां च ।
३३ महीङ् पूजायाम् ।
३४ रेखा श्लाघासादनयोः ।
३५ दुवस् परितापपरिचरणयोः ।
३६ तिरस् अन्तर्धौ ।
३७ अगद नीरोगत्वे ।
३८ उरस् बलार्थे ।
३९ तरण गतौ ।
४० पयस् प्रसृतौ ।
४१ सम्भूयस् प्रभूतभावे ।
४२ अम्बर, सम्बर सम्भरणे । आकृतिगणोऽयम् ।
[=५१]

इति कण्ड्वादि गणः ॥

कण्ड्वादिगणस्था धातवः ५१
प्राक्तना धातवः २०५४
सम्मेल्य धातवः २१०५

## सौत्रा धातवः

ऋति घृणायाम्[1] । जु वेगितायां गतौ[2] । साति सुखे[3] । स्तन्भु स्तम्भे[4] । स्कुन्भु धारणे[4] । स्कन्भु स्तम्भे[4] । स्तुन्भु निष्कोषणे[4] । वध हिंसायाम्[5] ।

❀ इति धातुपाठः ❀

१. ऋतेरीयङ् (अष्टा० ३.१.२९)
२. जुचङ्क्रम्य० (अष्टा० ३.२.१५०)
३. अनुपसर्गाल्लिम्प० (अष्टा० ३.१.१३८)
४. स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च । (अष्टा० ३.१.८२)
५. जनिवध्योश्च (अष्टा० ७.३.३५)

# गणपाठः

## १. सर्वादि-गणः [ सर्वादीनि सर्वनामानि । अ० १. १. २७ ]—

सर्व । विश्व । उभ । उभय । डतर । डतम । इतर । अन्य । अन्यतर । त्व । त्वत् । नेम । सम । सिम ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः ॥ त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् ॥ १ ॥

## २. स्वरादि-गणः [ स्वरादिनिपातमव्ययम् । अ० १. १. ३६ ]—

स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस्[१] । ऋधक्[२] । आरात् । अन्तिकात् । ऋते । युगपत् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत्[३] । शश्वत् । जोषम् । तूष्णीम् । बहिस् । आविस् । अवस् । अधस् । समया । निकषा । स्वयम् । मृषा । नक्तम् । माङ् । नञ् । हेतौ । हे । है । अद्धा । इद्धा । सामि । वत् । सनात् । सनत् । तिरस् । अन्तरा । अन्तरेण । मक् । ज्योक् । योक् । नक् । सना । सहसा । श्रद्धा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मुधा । मिथ्या । दिष्ट्या । वृथा । क्त्वातोसुन्कसुनः । कृन्मकारान्तः सन्ध्यक्षरान्तोऽव्ययीभावश्च । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । सत्रम् । समम् । नमस् । हिरुक् । तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । कृत्वसुजर्थः । आस्थालौ । अथ । अम् । आम् । प्रताम् । प्रतान् । प्रशान् ॥ आकृतिगणोऽयम् ॥ २ ॥

## ३. अयस्मयादि-गणः [ अयस्मयादीनि च्छन्दसि । अ० १. ४. २० ]—

अयस्मय । ऋक्वत ॥ आकृतिगणोऽयम् ॥ ३ ॥

## ४. चादि-गणः [ चादयोऽसत्त्वे । अ. १. ४. ५७ ]—

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । सूपत् । कूपत् । कुवित् । भूयस् । नेत् । चेत् । चण् । कच्चित् । यदि । यत्र । तत्र । नह ।

१. क्वचित् (ऋ. ८.४५.११) 'शनैस्' 'इत्याद्युदात्तोऽपि ॥ २. अन्यत्र प्रायेण सर्वत्राऽऽनुदात्तो यथा ऋ. ३. २५. १ ॥ ३. क्वचित् (     ) अन्तोदात्तोऽपि ।

हन्त । माकिम् । माकीम् । माकिर् । नकिम् । नकीम् । नकिर् । आकीम् । माङ् । नञ् । यावत् । तावत् । त्वा । त्वै । द्वै । द्वै । रे । रै । श्रौषट् । वौषट् । वषट् । स्वाहा । स्वधा । ओम् । किल । तथा । तथाहि । खलु । अथ । सु । सुष्ठु । स्म । अस्मि । अ । इ । उ । ऋ । ऌ । ए । ऐ । ओ । औ । आदह । उञ् । उकञ् । वेलायाम् । मात्रायाम् । यथा । यत् । तत् । किम् । पुरा । अद्धा । धिक् । हाहा । हे । है । हहे । प्याट् । पाट् । अहो । उताहो । आहो । अथो । ननु । मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चनस् । वात् । बत । सम् । शम् । कम् । अनुकम् । नहिकम् । हिकम् । शुकम् । सुकम् । सत्यम् । ऋतम् । आङ् । अ, मा, न, नो, ना प्रतिषेधे । उत । दह । इद्धा । मुधा । नोचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव । अनु । हाहो । हैहा । ईहा । आहोस्वित् । छम्बट् । शङ्के । खम् । दिष्ट्या । पशु । वट् । सह । अनुषक् । आनुषक् । अङ्ग । फट् । ताजक् । अये । अरे । चटु । चाटु । वाट् । कुम् । खुम् । घुम् । हुम् । अम् । आईम् । ईम् । शीम् । सिम् । सीम् । सी । वै । उपसर्ग-विभक्ति-स्वर-प्रतिरूपकाश्च निपाताः ॥ आकृतिगणोऽयम् ॥ ४ ॥

५. प्रादि-गणः [ प्रादय उपसर्गाः क्रियायोगे । अ० १. ४. ५८ ]—

प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप ॥५॥

६. ऊर्यादि गणः [ ऊर्यादिच्विडाचश्च । अ. १. ४. ६० ]

ऊरी । उररी । पापी[१] । ताली । आताली । वेताली । धूसी । शकला । संशकला । ध्वंसकला । भ्रंशकला । शकलादयो हिंसायाम् ॥ गुलगुधा पीडार्थे ॥ सजूः सहार्थे । फलू, फली, विक्ली, आक्ली इति विकारे ॥ आलोष्टी । केवाली । शेवाली[२] । वर्षाली । मस्मसा । मसमसा । एते हिंसायाम् ॥ वषट् । वौषट् । श्रौषट् । स्वाहा । स्वधा । बन्धा । प्रादुस् । श्रत् । आविस् ॥ ६ ॥

७. साक्षात्प्रभृति-गणः [ साक्षात्प्रभृतीनि च । अ० १. ४. ७३ ]—

साक्षात् । मिथ्या । चिन्ता । भद्रा । लोचना[३] । विभाषा । सम्पत्का । आस्था । अमा । श्रद्धा[४] । प्राजर्या । प्राजरुहा । वीजर्या । वीजरुहा । संसर्या । अर्थे । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । अग्नौ । वशे ।

१. 'पाम्पी' इति पाठान्तरम् । २. 'शैवाली' इति पाठान्तरम् । ३. 'रोचना' इति पाठान्तरम् । ४. 'अद्धा' इति पा० ।

विकम्पने। विहसने। विकसने। प्रहसने। प्रतपने। प्रादुस्। नमस्। आविस्॥ ७॥

८. तिष्ठद्गुप्रभृति-गणः [ तिष्ठद्गुप्रभृतीनि च। अ० २. १. १६ ]—

तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्। खलेबुसम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः॥ समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्[1]। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्॥ इच् कर्मव्यतिहारे॥ ८॥

९. शौण्डादि-गणः [ सप्तमी शौण्डैः। अ० २. १. ३९ ]—

शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अधिपटु[2]। पण्डित। कुशल। चपल। निपुण॥ ९॥

१०. पात्रेसम्मितादि-गणः [ पात्रेसम्मितादयश्च। अ० २. १. ४७ ]—

पात्रेसम्मिताः। पात्रेबहुलाः। उदरक्रिमिः[3]। कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमण्डूकः। नगरकाकः। नगरवायसः। मातरिपुरुषः। पिण्डीशूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेतृप्तः। गेहेधृष्टः। गर्भेतृप्तः[4]। आखनिकबकः। गोष्ठेशूरः। गोष्ठेविजिती। गोष्ठेक्ष्वेडी। गेहेमेही। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः[5]। कर्णे चुरचुराः[6]। उदुम्बरमशकः॥ आकृतिगणोऽयम्॥ १०॥

११. व्याघ्रादि-गणः [उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। अ०२.१.५५]—

व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक्ष[7]। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत्। पुण्डरीक। बलाहक॥ आकृतिगणोऽयम्॥ ११॥

१२. श्रेण्यादि-गणः [ श्रेण्यादयः कृतादिभिः। अ० २. १. ५८ ]—

श्रेणि। एक[8]। पूग। कुण्ड[9]। राशि। विशिख[10]। निचय। निधान[11]। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक।

---

१. 'अपदक्षिणम्' इति पाठान्तरम्। २. 'अधि। पटु' इति पृथक् शब्दद्वये क्वचित्। ३. 'उदुम्बरकृमिः' पा०। ४. 'गर्भेदृप्तः' पा०। ५. 'कर्णेटिरिटिरिः' पा०। ६. 'कर्णेचुरुचुरः' पा०। ७. 'वृक' पा०। ८. 'ऊक' पा०। ९. 'कुन्दुम' पा०। १०. 'विशिप' पा०। ११. 'निधन' पा०।

ब्राह्मण । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । कृपण । अभिरूपक ॥ आकृतिगणोऽयम् ॥ १२ ॥

**१३. कृतादि-गणः** [ श्रेण्यादयः कृतादिभिः । अ० २. १. ५८ ]—

कृत । मित । मत । भूत । उक्त । समाज्ञात । समाम्नात । समाख्यात । सम्भावित । अवधारित । निराकृत । अवकल्पित । उपकृत । उपाकृत । संसेवित ॥ आकृतिगणोऽयम् ॥ १३ ॥

**१४. श्रमणादि-गणः** [ कुमारः श्रमणादिभिः । अ० २. १. ६९ ]—

श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥१४॥

**१५. मयूरव्यंसकादि-गणः** [ मयूरव्यंसकादयश्च । अ० २. १. ७१ ]—

मयूरव्यंसकः । छात्रव्यंसकः । काम्बोजमुण्डः । यवनमुण्डः । छन्दसि—हस्तगृह्य[1] । पादगृह्य[1] । लाङ्गूलगृह्य[1] । पुनर्दाय ॥ एहीडादयो अन्यपदार्थे एहीडम् । एहियवं वर्त्तते । एहिवाणिजा क्रिया । अपेहिवाणिजा । प्रेहिवाणिजा । एहिस्वागता । अपेहिस्वागता । प्रेहिस्वागता । एहिद्वितीया । अपेहिद्वितीया । प्रोहकटा । अपोहकटा । प्रोहकर्दमा । अपोहकर्दमा । उद्धरचूडा[2] । आहरचेला । आहरवसना । आहरवनिता[3] । कृन्तविचक्षणा[4] । उद्धरोत्सृजा । उद्धमविधमा । उत्पचविपचा । उत्पतनिपता । उच्चावचम् । उच्चनीचम् । अपचितोपचितम्[5] । अवचितपराचितम्[6] । निश्चप्रचम् । अकिञ्चनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । उत्पत्यव्याकुला[7] । निपत्यरोहिणी । निषण्णश्यामा । अपेहिप्रघसा । प्रेहिविघसा । इहपञ्चमी[8] । इहद्वितीया । जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति—जहिजोडः । उज्जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः । आख्यातमाख्यातेन क्रियासातत्ये—अश्नीतपिबता । पचतभृज्जता । खादतमोदता । खादताचमता । आहरनिवपा । आवपनिष्किराः[9] । भिन्धिलवणा । छिन्धिविचक्षणा[10] । पचलवणा । पचप्रकूटा ॥ आकृतिगणोऽयम् ॥ १५ ॥

**१६. याजकादि-गणः** [ याजकादिभिश्च । अ० २. २. ९ ]—

याजक । पूजक । परिचारक । परिषेचक । परिवेषक । स्नातक[11] ।

---

१. 'हस्तेगृह्य । पादेगृह्य । लाङ्गूलेगृह्य' इति पाठान्तरम् । २. 'उद्धमचूडा' पा० । ३. "आहरवितता' पा० । ४. 'कृन्धिविचक्षणा' पा० । ५. 'आचोपचम्' पा० । ६. आचपराचम्' पा० । ७. 'उत्पत्यपाकला' पा० । ८. 'एहिपञ्चमा' पा० । ९.'आवपनिष्कश' पा० । १०. 'छिन्धिलवणा' पा० । ११.'स्नापक' पा० ।

अध्यापक । उत्सादक । उद्वर्त्तक । वर्त्तक । होतृ । पोतृ । भर्तृ । रथगणक । पत्तिगणक ॥ १६ ॥

## १७. राजदन्तादि-गणः [ राजदन्तादिषु परम् । अ० २. २. ३१ ]—

राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसम्मृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् । उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम् । आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । अवन्त्यश्मकम् । शूद्रार्यम् । स्नातकराजानौ । विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् । धर्मार्थौ । अर्थधर्मौ । कामार्थौ । अर्थकामौ । शब्दार्थौ । अर्थशब्दौ । वैकारिमतम् । गजवाजम् । गोपालधानीपूलासम् । पूलासककरण्डम्[1] । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । भार्यापती । जायापती । जम्पती । दम्पती । पुत्रपती । पुत्रपशू । केशश्मश्रू । श्मश्रुकेशौ । शिरोबीजम्[2] । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ । शिरोजानू ॥ आकृतिगणोऽयम् ॥ १७ ॥

## १८. आहिताग्न्यादि-गणः [ वाऽऽहिताग्न्यादिषु । अ० २. २. ३७ ]—

आहिताग्निः । जातपुत्रः । जातदन्तः । जातश्मश्रुः । तैलपीतः । घृतपीतः । ऊढभार्यः । गतार्थः ॥ आकृतिगणोऽयम् ॥ १८ ॥

## १९. कडारादि-गणः [ कडाराः कर्मधारये । अ० २. २. ३८ ]—

कडार । गडुल । काण । खञ्ज । खोड । कुण्ठ । खञ्जर । खलति । गौर । वृद्ध । भिक्षुक । पिङ्ग । पिङ्गल । तनु । वटर[3] । बधिर । कञ्ज । बर्बर । जठर ॥ १९ ॥

## २०. गवाश्वप्रभृति-गणः [ गवाश्वप्रभृतीनि च । अ. २. ४. ११ ]—

गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । कुब्जवामनम् । कुब्जकैरातम्[4] । पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । शाटीपिच्छकम्[5] । शाटीपट्टकम् । शाटीपटीकम् । उष्ट्रखरम् । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । दर्भशरम् । दर्भपूतीकम् । अर्जुनशिरीषम् । अर्जुनपुरुषम् । तृणोलपम् । दासीदासम् । कुटीकुटम् । भागवतीभागवतम् ॥ २० ॥

## २१. दधिपयआदि-गणः [ न दधिपयआदीनि । अ० २. ४. १४ ]—

दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । ब्रह्मप्रजापती । शिववैश्रवणौ ।

---

१. 'पूलासकरण्डम्' इति पाठान्तरम् । २. 'शिरोबिज्ञ' पा० । ३. 'भठर' पा० । ४. 'कुब्जकिरातम्' पा० । ५. 'शाटीप्रच्छदम्' पा० ।

स्कन्दविशाखौ। परिव्राट्कौशिकौ। परिव्राजककौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णौ। इध्माबर्हिषी। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यवसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे॥ २१॥

## २२. अर्धर्चादि-गणः [ अर्धर्चाः पुंसि च। अ० २. ४. ३१ ]—

अर्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूप। अन्धकार। दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। विधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन[1]। पात्रीव। षष्टिक। वार। बाण[2]। प्रोथ। कपित्थ। शुष्क। शील। शुल्ब[3]। सीधु। कवच। रेणु। कपट। सीकर[4]। मुसल। सुवर्ण। यूप[5]। चमस। वर्ण। क्षीर। कर्ष। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जम्भ[6]। वृत्त। पुस्त। क्ष्वेडित[7]। शृङ्ग। शृङ्खल। मधु। मूल। मूलक। शराव। शाल। वप्र। विमान। मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट[7]। मस्तक। वलय। कुसुम। तृण। पङ्क। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम[8]। भूषण। इल्कस[9]। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश। फलक। दिन। दैवत[10]। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। वल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। अम्बर। कुट्टिम। मण्डल। कुण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुस्। मान। मव[11]। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। शकल। कुणप। विशाल। बुस्त। पुस्तक। निगड। खल। स्थूल। नाल। कटक। कण्टक। छाल। कुमुद। कुङ्कुम। विडङ्ग। पिण्याक। आर्द्र। योध[12]। बिम्ब।

---

१. 'खलीन' इति पाठान्तरम्। २. 'वारबाण' इत्येकः शब्दः क्वचित्। ३. 'शुल्क' पा०। ४. 'शीकर' पा०। ५. 'पूर्व' पा०। ६. 'जृम्भ' पा०। ७. 'नट' पा०। ८. 'आश्रय' पा०। ९. 'इक्कस' पा०। १०. 'देवक' पा०। ११. 'मठ' पा०। १२. 'यौध' पा०।

कुक्कुट । कुडप । खण्डल । पञ्चक । वसु । स्तन । कलह । वर्चस्क । कूर्च । तण्डक ।। आकृतिगणोऽयम् ।। २२ ।।

## २३. पैलादि-गणः [ पैलादिभ्यश्च । अ० २.४.५९ ]—

पैल । शालङ्कि । सात्यकि । सात्यकामि[1] । औदमज्जि । औदव्रजि । औदमेघि । औद्बुद्धि[2] । दैवस्थानि । पैङ्गलायनि । रौहक्षिति[3] । मौलिङ्गि । औद्राहमानि । औज्जिहानि । राणि । रावणि । राहवि । औदमज्जि । औदन्यि । औदञ्चि । सौमनि ।। तद्राजाच्चाणः ।। २३ ।।

## २४. तौल्वलादि-गणः [ न तौल्वलिभ्यः । अ० २.४.६१ ]—

तौल्वलि । धारणि । रावणि । पारणि । दैलीपि । दैवलि[4] । दैवमति । दैवयज्ञि । वार्कलि । नैवकि । दैवमित्रि । चाफट्टकि । प्रादोहनि । प्रावाहणि । मान्धातकि । आनुहारति[5] । श्वाफल्कि । आनुमति[6] । आहिंसि । आसुरि । आयुधि । नैमिषि[7] । आसिबन्धकि । बैकि[8] । पौष्करसादि । वैरकि । वैलकि[9] । वैहति । वैकर्णि । कारेणुपालि । कामलि । रान्धकि । आसुराहति । प्राणाहति[10] । पौष्कि[11] । कान्दकि । वैशीति । बान्धकि । आसिनासि । दौषकगति । आन्तराहति ।। २४ ।।

## २५. यस्कादि-गणः [ यस्कादिभ्यो गोत्रे । अ० २.४.६३ ]—

यस्क । लभ्य[12] । दुह्य । आयःस्थूण । तृणकर्ण । सदामत्त । कम्बलभार । अहिर्योग[13] । कर्णाटक[14] । पर्णाढक । पिण्डीजङ्घ[15] । बकसक्थ । वस्ति । कद्रु[16] । विश्रि । अजवस्ति । मित्रयु । रक्षामुख[17] । जङ्घारथ । उत्कास । कटुक । मन्थक । पुष्करसद् । विषपुट । उपरिमेखल । क्रोष्टुमान । क्रोष्टुपाद । क्रोष्टुमाय । शीर्षमाय । खरप । पदक । वर्मक[18] । भन्दन[19] । भडिल । भण्डिल । भडित । भण्डित ।। २५ ।।

## २६. गोपवनादि-गणः [ न गोपवनादिभ्यः । अ० २.४.६७ ]—

गोपवन । शिग्रु । बिन्दु । भाजन । अश्व[20] । अवतान । श्यामाक[21] । श्वापर्ण ।। २६ ।।

---

१. 'सात्यङ्कामि' इति पाठान्तरम् । २. 'औदशुद्धि' पा० । ३. 'राहक्षति' पा० । ४. 'दैवति' पा० । ५. 'आनुरोहति' पा० । ६. 'आनुति' पा० । ७. 'नैमिश्रि' पा० । ८. 'वैङ्कि' पा० । ९. 'वैल्वकि' पा० । १०. 'प्राडाहति' पा० । ११. 'पौषिप' पा० । १२. 'लह्य' पा० । १३. 'बहिर्योग' पा० । १४. 'कर्णाढक' पा० । १५. 'पिण्डजङ्घ' पा० । १६. 'कद्र', 'कुद्रि' पा० । १७. 'रक्षोमुख' पा० । १८. 'वर्षुक' पा० । १९. 'भलन्दन' पा० । २०. 'अश्वावतान' इत्येकः शब्दः क्वचित् । २१. 'श्यामक' पा० ।

**२७. तिककितवादि-गणः** [ तिककितवादिभ्यो द्वन्द्वे । अ० २.४.६८ ]—

तिककितवाः । वङ्खरभण्डीरथाः । उपकलमकाः । पफकनरकाः । बकनखश्वगुदपरिणद्धाः । उब्जककुभाः । लङ्कशान्तमुखाः । उरसलङ्कटाः । भ्रष्टककपिष्ठलाः । कृष्णाजिनकृष्णसुन्दराः । अग्निवेशदासेरकाः * ॥ २७ ॥

**२८. उपकादि-गणः** [ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । अ० २.४.६९ ]—

उपक । लमक । भ्रष्टक । कपिष्ठल । कृष्णाजिन । कृष्णसुन्दर । पण्डारक[1] । अण्डारक[2] । गडुक । सुपर्यक । सुपिष्ट । पिष्ट । मयूरकर्ण । खारीजङ्घ[3] । शलाबल[4] । पतञ्जल । कठेरणि । कुषीतक । काशकृत्स्न[5] । निदाघ । कलशीकण्ठ । दामकण्ठ । कृष्णपिङ्गल । कर्णक । पर्णक । जटिलक । बधिरक । जन्तुक । अनुलोम । अर्धपिङ्गलक । प्रतिलोम । प्रतान । अनभिहित । चूडारक । उदङ्क । सुधायुक । अबन्धक । पदञ्चल[6] । अनुपद । अपजग्ध । कमक । लेखाभ्र । कमन्दक । पिञ्जल[7] । मसूरकर्ण । मदाघ । कदामत्त । कवन्तक । कमन्तक । वर्णक ॥ २८ ॥

**२९. भृशादि-गणः** [ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । अ० ३.१.१२ ]—

भृश । शीघ्र । मन्द । चपल । पण्डित । उत्सुक । उन्मनस् । अभिमनस् । सुमनस् । दुर्मनस् । रहस् । रेहस् । संश्चत् । तृपत् । शश्वत् । बृहत्[8] । वेहत् । नृषत् । शुधि । अधर । ओजस् । वर्चस् । विमनस् । रोहत् । शुचिस् । शुचिवर्चस् । सुरजस् । अरजस्[9] ॥ २९ ॥

**३०. लोहितादि-गणः** [ लोहितादिडाज्भ्यः क्यष् । अ० ३.१.१३ ]—

लोहित । नील । हरित । पीत । मद्र । फेन । मन्द । चरित । दास ॥ आकृतिगणोऽयम् ॥ ३० ॥

**३१. सुखादि-गणः** [ सुखादिभ्यः कर्तृवेदनायाम् । अ० ३.१.१८ ]—

सुख । दुःख । तृप्त[10] । गहन । कृच्छ्र । अस्र । आस्र । अलीक । प्रतीप । करुण[11] । कृपण । सोढ ॥ ३१ ॥

**३२. कण्ड्वादि-गणः** [ कण्ड्वादिभ्यो यक् । अ० ३.१.२७ ]—

कण्डूञ् । मन्तु । वल्गु । असु । असू । असूञ् । लेट् । लोट् । लेला ।

---

* 'अग्निवेशदशेरकाः' पा० ।

१. 'चूडारक' इति पाठान्तरम् । २. 'अडारक' पा० । ३. 'खरीजङ्घ' पा० । ४. 'शलाथल' पा० । ५. 'कशकृत्स्न' पा० । ६. 'पदञ्जल' पा० । ७. 'पिञ्जूलक' पा० । ८. 'भ्रमत्' पा० । ९. 'अजरस्' पा० । १०. 'तृप्र' पा० । ११. 'करुणा' पा० ।

इरस् । इरज् । इरञ् । इयस् । उषस् । वेद । मेधा । कुसुभ । मगध । तन्तस् । पम्पस् । सुख । दुःख । सपर । अरर । भिषज् । भिष्णज् । इषुध । चरण । वरण । चुरण । तुरण । भुरण । गद्गद । एला । केला । खेला । इला । लिट । लाट । ह्रणीङ् । महीङ् । रेखा । दुवस् । तिरस् । अगद । उरस् । तरण । पयस् । सम्भूयस् । अम्बर । सम्बर ॥ ३२ ॥

३३. नन्द्यादि-गणः [नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । अ० ३.१.१३४]—

नन्दि–वाशि–मदि–दूषि–साधि–वर्धि–शोभि–रोचिभ्यो ण्यन्तेभ्यः सञ्ज्ञायाम्—नन्दनः । वाशनः । मदनः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः ॥ सहितपिदमेः सञ्ज्ञायाम्—सहनः । तपनः । दमनः ॥ जल्पनः । रमणः । दर्पणः । सङ्क्रन्दनः । सङ्कर्षणः । संहर्षणः । जनार्दनः । यवनः । मधुसूदनः । विभीषणः । लवणः । चित्तविनाशनः । कुलदमनः । शत्रुदमनः ।३३

३४. ग्रह्यादि-गणः [ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । अ० ३.१.१३४ ]—

ग्राही । उत्साही । उद्दासी । उद्भासी । स्थायी । मन्त्री । सम्मर्दी ॥ रक्ष-श्रु-वस-वप-शां नौ—निरक्षी । निश्रायी । निवासी । निवापी । निशायी ॥ याचि-व्याहृ-संव्याहृ-व्रज-वद-वसां प्रतिषिद्धानाम्—अयाची । अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी॥ अचामचित्तकर्तृकाणाम्–अकारी । अहारी । अविनायी । अविशायी । विशयी ॥ विषयी देशे—विषयी । अभि-भावी भूते—अभिभावी । अपराधी । उपरोधी । परिभावी । परिभवी ॥३४॥

३५. पचादि-गणः [ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । अ० ३.१.१३४ ]—

पच । वच । वप । वद । चल । शल । पत । नदट् । भषट् । वस । गरट् । प्लवट् । चरट् । तरट् । चोरट् । गाहट् । जर[1] । मर[2] । क्षर । । क्षम[3] । सूदट् । देवट् । सेव । मेष । कोप[4] । मेध । नर्त । व्रण । दर्श । दंश । सर्प । दम्भ । दर्प । जारभर । श्वपच ॥ आकृतिगणोऽयम् ॥ ३५ ॥

३६. गम्यादि-गणः [ भविष्यति गम्यादयः । अ० ३.३.३ ]—

गमी । आगमी[5] । प्रस्थायी । प्रतिरोधी । प्रतिबोधी । प्रतियोधी । प्रतियोगी । प्रतियायी । आयायी । भावी ॥ ३६ ॥

३७. भिदादि-गणः [ षिद्भिदादिभ्योऽङ् । अ० ३.३.१०४ ]—

भिदा । छिदा । विदा । क्षिपा । गुहा गिर्योषध्योः । श्रद्धा । मेधा । गोधा । आरा । हारा । कारा । क्षिया । तारा । धारा । भारा । रेखा । लेखा । चूडा ।

१. 'रज' इति पाठान्तरम् । २. 'मद' पा० । ३. 'क्षप' पा० । ४. 'कोष' पा० । ५. 'आगामी' इति पा० ।

पीडा। वपा। वसा। मृजा*। क्रपेः सम्प्रसारणञ्च—कृपा। रुजा। सेधा। (भिदा विदारणे। छिदा द्वैधीकरणे। आरा शस्त्र्याम्। धारा प्रपाते)॥३७॥

**३८. भीमादि-गणः** [भीमादयोऽपादाने। अ० ३.४.७४]—

भीम। भीष्म। भयानक। वरु†। चरु। प्रस्कन्दन। भूमि। रजस्। संस्कार। सङ्क्रन्दन। प्रपतन। समुद्र। स्रुव। स्रुच। स्रुक्। दृष्टि। रक्षस्। शङ्कु। सुक। मूर्ख। खलति॥ आकृतिगणोऽयम्॥ ३८॥

**३९. अजादि-गणः** [अजाद्यतष्टाप्। अ० ४.१.४]—

अजा। एडका। चटका। अश्वा। मूषिका। बाला। होढा। पाका। वत्सा। मन्दा। विलाता। पूर्वापहरणा। अपरापहरणा॥ सम्भस्त्राजिनशण-पिण्डेभ्यः फलात्—सम्फला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला॥ सत्प्राक्प्रत्यक्काण्डप्रान्तशतैकेभ्यः पुष्पात्—सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा॥ शूद्रा चामहत्पूर्वा जातिः। क्रुञ्चा। उष्णिहा। देवविशा। ज्येष्ठा। कनिष्ठा। मध्यमा। दंष्ट्रा। कोकिला। मूलान्नञः—अमूला॥ आकृतिगणोऽयम्॥ ३९॥

**४०. स्वस्रादि-गणः** [न षट् स्वस्रादिभ्यः। अ० ४.१.१०]—

स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः॥ ४०॥

**४१. सपत्न्यादि-गणः** [नित्यं सपत्न्यादिषु। अ० ४.१.३५]—

सपत्नी। एकपत्नी। वीरपत्नी। पिण्डपत्नी। भ्रातृपत्नी। पुत्रपत्नी। श्वपत्नी। भद्रपत्नी॥ दासाच्छन्दसि—दासपत्नी॥ ४१॥

**४२. गौरादि-गणः** [षिद्गौरादिभ्यश्च। अ० ४.१.४१]—

गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। तूण। द्रुण। द्रोण। हरिण। पटर। उकण[1]। आमलक। कुवल। बदर। बिम्ब। कर्कर। तर्कार। शर्कार। पुष्कर। शिखण्ड[2]। सुनन्द। सुषम। सुधव। सलन्द[3]। अलिन्द। गडुल। षाण्डश। आनन्द। अश्वत्थ। सृपाट। आढक। शष्कुल। सूर्म। सुव[4]। सूर्य[5]। शूष। पूष। मूष[6]। यूथ। घातक[7]। सकलूक। सलूक। मालक। मालत। साल्वक। उभय। भृङ्ग। वेतस। अतस। पृस[8]। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही, अनड्वाही॥

* 'सृजा' इति पा०। † 'वह' इति पा०।

१. 'उणक' इति पाठान्तरम्। २. 'शष्कण्ड' इति पा०। ३. 'सलद' इति पा०। ४. 'सूच' इति पा०। ५. 'शूर्प' इति पा०। ६. 'यूष' इति पा०। ७. 'धातक' इति पा०। ८. 'बृस' इति पा०।

एषण करणे। देह। काकादन। गवादन। तेजन। रजन। लवण। पान[1]। मेघ। गौतम। आयःस्थूण। भौरि[2]। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलिङ्गि[3]। आपिच्छि। आलजि। आलन्धि। आलक्षि। आरट। टोट। नट। नाट। मूलाट। ज्ञातन[4]। पातन। पावन। आस्तरण। अधिकरण। अधिकार। आग्रहायणी। प्रत्यवरोहिणी। सेवन। सुमङ्गलात्सञ्ज्ञायाम्। अण्डर। सुन्दर। मण्डर। मण्डल। पट। पिण्ड। कुर्द[5]। गूर्द। सूर्द। पाण्ट[6]। लोफाण्ट[7]। कदर। कन्दर। कन्दल[8]। बृहत्। महत्। सौधर्म। रोहिणी नक्षत्रे। रेवती नक्षत्रे। विकल। निष्कल। पुष्कल। कटाच्छ्रोणिवचने। पिङ्गल। देह। काकण। पिप्पल्यादयश्च—पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी। क्रोष्ट्री। मातामही। पितामही। आकृतिगणोऽयम्॥ ४२॥

## ४३. बह्वादि-गणः [बह्वादिभ्यश्च। अ० ४.१.४५]—

बहु। पद्धति। अङ्कति। अञ्चति। अंहति। वहति। शकटि॥ शक्तिः शस्त्रे॥ शारि। वारि। गति[9]। अहि। कपि। मुनि। यष्टि॥ इतः प्राण्यङ्गात्॥ कृदिकारादक्तिनः॥ सर्वतोऽक्तिन्नर्थादित्येके॥ चण्डा। अराल। कमल। कृपाण[10]। विकट। विशाल। विशङ्कट। भरुज। ध्वज॥ चन्द्रभागान्नद्याम्—चन्द्रभागी। कल्याण। उदार। पुराण। अहर्[11]॥ ४३॥

## ४४. क्रोडादि-गणः [न क्रोडादिबह्वचः। अ० ४.१.५६]—

क्रोड। खुर। उख। बालु। शफ। गुद। घोण। भग। गल॥ आकृतिगणोऽयम्॥ ४४॥

## ४५. शार्ङ्गरवादि-गणः [शार्ङ्गरवाद्यञो ङीन्। अ० ४.१.७३]—

शार्ङ्गरव। कापटव। गौगुलव। ब्राह्मण। वाहतव। गौतम। कामण्डलेय। ब्राह्मकृतेय। आनिचेय। आनिधेय। आशोकेय। वात्स्यायन। मौञ्जायन। कैकसेय। काव्य। शैव्य। एहि। पर्येहि। आश्मरथ्य। औदपान। अराल। चण्डाल। वतण्ड॥ भोगवद्गौरिमतोः सञ्ज्ञायाम्—भोगवती। गौरिमती॥ नृनरयोर्वृद्धिश्च—नारी॥ ४५॥

## ४६. क्रौड्यादि-गणः [क्रौड्यादिभ्यश्च। अ० ४.१.८०]—

क्रौडि। लाडि। व्याडि। आपिशलि। आपक्षिति। चौपयत। चैटयत।

---

१. 'यान' इति पाठान्तरम्। २. 'भौरिकि' पा०। ३. 'आलम्बि' पा०। ४. 'शातन' पा०। ५ 'ऊर्द' पा०। ६. 'पाण्ड' पा०। ७. 'लोहाण्ड' पा०। ८. 'कन्दूल' पा०। ९. 'राति' पा०। १०. 'कृपण' पा०। ११. 'अहन्' पा०।

अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः[1] । शरणपादः[2] । समपादः । एकशितिपात् ॥ पात्रेसम्मितादयश्च ॥ १९० ॥

१९१. घोषादि-गणः [ घोषादिषु च । अ० ६.२.८५ ]—

घोष । कट । पल्वल । वल्लभ । ह्रद । बदरी । पिङ्गल । पिशङ्ग । शाला[3] । रक्षः[4] । शिल्पी । अश्वत्थ । तृण । शाल्मली । मुनि । पुंस् । कूट ॥ १९१ ॥

१९२. छात्र्यादि-गणः [ छात्र्यादयः शालायाम् । अ० ६.२.८६ ]—

छात्रि । पैलि । भाण्डि । व्याडि । आखण्डि । गोमि । आपिशलि । आपारि ॥ १९२ ॥

१९३. कर्क्यादि-गणः [ प्रस्थेऽवृद्धमकर्क्यादीनाम् । अ० ६.२.८७ ]—

कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक[5] । कुरल[6] । कवल । बदर ॥ १९३ ॥

१९४. मालादि-गणः [ मालादीनां च । अ० ६.२.८८ ]—

माला । शाला । शोणा । द्राक्षा । क्षौमा । क्षामा । काञ्ची । एक । काम ॥ १९४ ॥

१९५. क्रत्वादि-गणः [ क्रत्वादयश्च । अ० ६.२.११७ ]—

क्रतु । दृशीक । प्रतीक । प्रतूर्ति । हव्य । भाग[7] । ॥ १९५ ॥

१९६. चिहणादि-गणः ] आदिश्चिहणादीनाम् । अ० ६.२.१२४ ]—

चिहण । मडर । मडुर । वैतुल । पटत्क । वैडालिकर्ण । वैतालिककर्णि । कुक्कुट । चित्कण । चिक्कण ॥ १९६ ॥

१९७. चूर्णादि-गणः [ चूर्णादीन्यप्राणिषष्ठ्याः । अ० ६.२.१३३ ]—

चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम[8] । दलप । चमसी । चक्कन । चक्कन । चौल ॥ १९७ ॥

१९८. वनस्पत्यादि-गणः [उभे वनस्पत्यादिषु युगपत् । अ० ६.२.१३९]—

वनस्पतिः । बृहस्पतिः । शचीपतिः । तनूनपात् । नराशंसः । शुनःशेपः । शण्डामर्कौ । तृष्णावरूत्री । बम्बाविश्ववयसौ । मर्मृत्युः ॥ १९८ ॥

---

१. 'व्युष्टित्रिरात्रः' पा० । २. 'गणपादः' पा० । ३. 'माला' पा० । ४. 'रक्षा' पा० । ५. 'कन्दुक' पा० । ६. 'कुवल' पा० । ७. 'भग' पा० । ८. 'कुन्दुम' पा० ।

१९९. आचितादि-गणः [ सञ्ज्ञायामनाचितादीनाम् अ० ६.२.१४५ ]—

आचित । पर्याचित । आस्थापित । परिगृहीत । निरुक्त । प्रतिपन्न । अपश्लिष्ट । प्रश्लिष्ट । उपहित । उपस्थित । उपद्रुत । संहिताऽगवि ॥१९९॥

२००. प्रवृद्धादि-गणः [ प्रवृद्धादीनां च । अ० ६.२.१४६ ]—

प्रवृद्ध । प्रयुक्त[1] । अवहित । खट्वारूढ । कविशस्त ॥ आकृतिगणोऽयम् ॥ २०० ॥

२०१. चार्वादि-गणः [ कृत्योकेष्णुच्चार्वादयश्च । अ० ६.२.१५८ ]—

चारु । साधु । यौधिक । अनङ्गमेजय । वदान्य । अकस्मात् ॥ वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः सञ्ज्ञायाम् ॥ विकारसदृशे व्यस्तसमस्ते ॥ गृहपति । गृहपतिक ॥ राजाह्नोश्छन्दसि ॥२०१॥

२०२. गुणादि-गणः [ न गुणादयोऽवयवाः । अ० ६.२.१७४ ]—

गुण । अक्षर । छन्दोमान । सूक्त । अध्याय ॥ आकृतिगणोऽयम् ॥२०२॥

२०३. निरुदकादि-गणः [ निरुदकादीनि च । अ० ६.२.१८३ ]—

निरुदक । निरुलप । निरुपल । निर्मशक । निर्मक्षिक । निष्कालक । निष्कालिक । निष्पेष । दुस्तरीप । निस्तरीप । निस्तरीक । निरजिन । उदजिन । उपाजिन । परेर्हस्तपादकेशकर्षाः ॥ आकृतिगणोऽयम् ॥ २०३ ॥

२०४. अंश्वादि-गणः [ प्रतेरंश्वादयस्तत्पुरुषे । अ० ६.२. १९२ ]—

अंशु । जन । राजन् । उष्ट्र । रोटक[2] । अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्ध । पुर ॥ २०४ ॥

२०५. गौरादि-गणः [ उपाद् द्व्यजजिनमगौरादयः । अ० ६. २.१९३ ]—

गौर । नैष[3] । तैल । लेट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्प । पाद ॥ २०५ ॥

२०६. प्रियादि-गणः [स्त्रियाः पुंवद्० स्त्रियामपूरणीप्रियादिषु । अ०६.३.३३]

प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्ति । सचिवा । अम्बा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । वामना । बाला । तनया । स्वा ॥ २०६ ॥

---

१. 'प्रयुत' पा० । २. 'खेटक' पा. । ३. 'तैष' पा. ।

२०७. पृषोदरादि-गणः [ पृषोदरादीनि यथोपदिष्टम् । अ० ६.३.१०७ ]—

पृषोदर । पृषोद्वान । बलाहक । जीमूत । श्मशान । उलूखल । पिशाच । बृसी । मयूर ॥ आकृतिगणोऽयम् ॥ २०७ ॥

२०८. कोटरादि-गणः [वनगिर्योः० कोटरकिंशुलकादीनाम् । अ०६.३.११६]

कोटर । मिश्रक । पुरक । सिध्रक । सारिक[१] ॥ २०८ ॥

२०९. किंशुलकादि-गणः [वनगिर्योः...किंशुलकादीनाम् । अ० ६.३.११६]—

किंशुलक । साल्वक[२] । अञ्जन । भञ्जन । लोहित । कुक्कुट । नड ॥२०९॥

२१०. अजिरादि-गणः [ मतौ बह्वचोऽनजिरादीनाम् । अ० ६.३.११८ ]—

अजिर । खदिर । पुलिन । हंसकारण्ड[३] । चक्रवाक । मलय ॥ २१० ॥

२११. शरादि-गणः [ शरादीनां च । अ० ६.३.११९ ]—

शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु ॥ २११ ॥

२१२. स्नात्व्यादि-गणः [ स्नात्व्यादयश्च । अ० ७.१.४९ ]—

स्नात्वी । पीत्वी ॥ आकृतिगणोऽयम् ॥ २१२ ॥

२१३. द्वारादि-गणः [ द्वारादीनां च । अ० ७.३.४ ]—

द्वार । स्वर । स्वाध्याय । व्यल्कश । स्वस्ति । स्वग्राम । स्फ्यकृत् । स्वादुमृदु । श्वन् । स्व । स्वर् । श्वस् ॥ २१३ ॥

२१४. स्वागतादि-गणः [ स्वागतादीनां च । अ० ७. ३. ७ ]—

स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति ॥ २१४ ॥

२१५. अनुशतिकादि-गणः [ अनुशतिकादीनां च । अ० ७.३.२० ]—

अनुशतिक । अनुहोड । अनुसंवरण । अनुसंवत्सर । अङ्गारवेणु । असिहत्य । अस्यहेति । वध्योग । पुष्करसत् । अनुहरत्[४] । कुरुकत । कुरुपञ्चाल । उदकशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री ॥ राजपुरुषात्ष्यञि ॥ सूत्रनड ॥ आकृतिगणोऽयम् ॥ २१५ ॥

---

१. 'शारिक' पा. । २. 'शाल्व', 'शाल्वक' इति पाठान्तरे । ३. 'हंस । कारण्ड' इति पृथक् शब्दद्वयं क्वचित् । ४. 'अनुहत्', 'अनुरहत्' पा० ।

२१६. न्यङ्क्वादि-गणः [ न्यङ्क्वादीनां च । अ० ७.३.५३ ]—

न्यङ्कु । मद्गु । भृगु । दूरेपाक । फलेपाक । क्षणेपाक । दूरेपाक्‍ु । फलेपाक्‍ु । तक्र । वक्र । व्यतिषङ्ग । अनुषङ्ग । अवसर्ग । उपसर्ग । श्वपाक । मांसपाक । मूलपाक । कपोतपाक । उलूकपाक ॥ सञ्ज्ञायां मेघनिदाघाव-दाघार्घाः ॥ न्यग्रोध । वीरुत् ॥ २१६ ॥

२१७. गोत्रादि-गणः [ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः अ० ८.१.२७ ]

गोत्र । ब्रुव । प्रवचन । प्रहसन । प्रकथन । प्रत्ययन । प्रपञ्च । प्राय । न्याय । प्रचक्षण । विचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ । नाम वा ॥ २१७ ॥

२१८. काष्ठादि-गणः [ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः[1] अ० ८.१.६७ ]

काष्ठ । दारुण । अमातापुत्र । अयुत । अद्भुत । अनुक्त । भृश । घोर । परम । सु । अति । अनुज्ञात । कल्याण । वेश ॥ २१८ ॥

२१९. यवादि-गणः [ मादुपधायाश्च मतोर्वोऽयवादिभ्यः । अ० ८.२.९ ]

यव । दल्मि । ऊर्मि । भूमि । कृमि । क्रुञ्चा । वशा । द्राक्षा । ध्राक्षा । वृक्षा । वेशा । ध्रजि । ध्वजि । सञ्जि । वजि । व्रजि । शञ्जि । निजि । सिजि । सिञ्जि । हरित् । ककुत् । गरुत् । इक्षु । मधु । द्रुम । मण्ड । धूम ॥ आकृतिगणोऽयम् ॥ २१९ ॥

२२०. कस्कादि-गणः [ कस्कादिषु च । अ० ८.३.४८ ]—

कस्क । कौतस्कुत । भ्रातुष्पुत्र । शुनस्कर्ण । सद्यस्काल । सद्यस्क्री । सद्यस्क । कांस्कान् । सर्पिष्कुण्डिका । धनुष्कपालम् । बर्हिष्पूल । यजुष्पात्र । अयस्काण्ड । तमस्काण्ड । मेदस्पिण्ड ॥ आकृतिगणोऽयम् ॥ २२० ॥

२२१. सुषामादि-गणः [ सुषामादिषु च । अ० ८.३.९८ ]—

सुषामा । निष्षामा । दुष्षामा । सुषेधः । निष्षेधः । दुष्षेधः । सुषन्धिः । दुःषन्धिः । निषन्धिः । सुष्ठु । दुष्ठु । अपष्ठु । ॥ गौरिषक्थः सञ्ज्ञायाम् ॥ प्रतिष्णिका । जलाषाहम् । नौषेवनम्[2] । दुन्दुभिषेवनम् ॥ एति सञ्ज्ञाया-मगात् ॥ नक्षत्राद् वा ॥ आकृतिगणोऽयम् ॥ २२१ ॥

---

१. केषाञ्चिन् मतेन 'काष्ठादिभ्यः' इति पदमपाणिनीयम्, तदा काष्ठादिगणोऽप्य-पाणिनीयः । २. 'नौषेचनम्' पा० ।

२२२. सवनादि-गणः [ न रपरसृपि० सवनादीनाम् । अ० ८.३.११० ]—

सवने सवने । सूते सूते । सामे सामे । सोमे सोमे । सवनमुखे सवनमुखे । अनुसवनम् अनुसवनम् । किसं किसम् । बृहस्पतिसवः । शकुनिसवनम् । सुते सुते । संवत्सरे संवत्सरे । मुसलं मुसलम् । विसं विसम् । गोसनिम् । अश्वसनिम् ॥ २२२ ॥

२२३. क्षुभ्नादि-गणः [ क्षुभ्नादिषु च । अ० ८. ४. ३८ ]—

क्षुभ्ना । नृनमन । नन्दिन् । नन्दन । नगर । नृतिर् यङि । तृप्नु । नर्तन । गहन । नन्दन[1] । निवेश । निवास । अग्नि । अनूप ॥ आचार्यादणत्वं च । हायन । इरिकादिभ्यो वनोत्तरपदेभ्यः सञ्ज्ञायाम्—इरिका । तिमिर । समीर । कुबेर । हरि । कर्मार ॥ आकृतिगणोऽयम् ॥ २२३ ॥

इति गणपाठः

---

१. 'नदन' पा० ।

# शिक्षा-सूत्रपाठः

१ आकाशवायुप्रभवः शरीरात्
समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो
वर्णत्वमागच्छति यः स शब्दः ।।

२ तमक्षरं ब्रह्म परं पवित्रं
गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव
सम्यक् प्रयुक्तः पुरुषं युनक्ति ।।

३ वर्णास्त्रिषष्टिः ।

४ स्थानमिदं करणमिदं
प्रयत्न एष द्विधाऽनिलः ।
स्थानं पीडयति वृत्तिकारः
प्रक्रम एषोऽथ नाभितलात् ।।

## १—स्थान-प्रकरणम्

१ अकुँहविसर्जनीयाः कण्ठ्याः ।
२ हविसर्जनीयावुरस्यावेकेषाम् ।
३ जिह्वामूलीयो जिह्व्यः ।
४ कवर्ग ऋवर्णश्च जिह्व्यः ।
५ सर्वमुखस्थानमवर्णमित्येके ।
६ कण्ठ्यानास्यमात्रानित्येके ।
७ इचुँयशास्तालव्याः ।
८ ऋटुँरषा मूर्धन्याः ।
९ रेफो दन्तमूलीय एकेषाम् ।
१० दन्तमूलस्तु तवर्गः ।
११ लतुँलसा दन्त्याः ।
१२ वकारो दन्त्यौष्ठ्यः ।
१३ सृक्किणीस्थानमेकेषाम् ।
१४ उपूँपध्मानीया ओष्ठ्याः ।
१५ अनुस्वारयमा नासिक्याः ।
१६ कण्ठ्यनासिक्यमनुस्वारमेके ।
१७ यमाश्च नासिक्यजिह्वामूलीया एकेषाम् ।
१८ एदैतौ कण्ठ्यतालव्यौ ।
१९ ओदौतौ कण्ठ्यौष्ठ्यौ ।
२० ङञणनमाः स्वस्थाननासिकास्थानाः ।
२१ द्वे द्वे वर्णे सन्ध्यक्षराणामारम्भके भवतः ।
२२ सरेफ ऋवर्णः ।

## २—करण-प्रकरणम्

१ जिह्व्यतालव्यमूर्धन्यदन्त्यानां जिह्वा करणम् ।
२ जिह्वामूलेन जिह्व्यानाम् ।
३ जिह्वामध्येन तालव्यानाम् ।
४ जिह्वोपाग्रेण मूर्धन्यानाम् ।
५ जिह्वाग्राधः करणं वा ।
६ जिह्वाग्रेण दन्त्यानाम् ।
७ इत्येतदन्तः करणम् ।

## ३—अन्तःप्रयत्न-प्रकरणम्

१ प्रयत्नोऽपि द्विविधः ।
२ आभ्यन्तरो बाह्यश्च ।

३ आभ्यन्तरस्तावत् ।
४ स्पृष्टकरणाः स्पर्शाः ।
५ ईषत्स्पृष्टकरणा अन्तस्थाः ।
६ ईषद्विवृतकरणा ऊष्माणः ।
७ विवृतकरणा वा ।
८ विवृतकरणाः स्वराः ।
९ संवृतस्त्वकारः ।
१० इत्येषोऽन्तः प्रयत्नः ।

—:*:—

४—बाह्यप्रयत्न-प्रकरणम्

१ अथ बाह्याः प्रयत्नाः ।
२ वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदानाश्चाघोषाः ।
३ एके अल्पप्राणा इतरे महाप्राणाः
४ वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च ।
५ एकेऽन्तस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः ।
६ यथा तृतीयास्तथा पञ्चमाः ।
७ आनुनासिक्यमेषामधिको गुणः ।
८ शादय ऊष्माणः ।
९ सस्थानेन द्वितीयाः ।
१० हकारेण चतुर्थाः ॥

—•—

५—स्थानपीडन-प्रकरणम्

१ तत्र स्पर्शयमवर्णकरो वायुरयःपिण्डवत् स्थानमभिपीडयति।
२ अन्तस्थवर्णकरो वायुर्दारुपिण्डवत् ।
३ ऊष्मस्वरवर्णकरो वायुरूर्णापिण्डवत् ।
४ उक्ताः स्थानकरणप्रयत्नाः॥

—:*:—

६—वृत्तिकार-प्रकरणम्

१ अवर्णो
ह्रस्वदीर्घप्लुतत्वाच्च
त्रैस्वर्योपनयेन च ।
आनुनासिक्यभेदाच्च
सङ्ख्यातोऽष्टादशात्मकः ॥
२ एवमिवर्णादयः ।
३ लृवर्णस्य दीर्घा न सन्ति ।
४ तं द्वादशभेदमाचक्षते ।
५ यदृच्छाशब्देऽशक्तिजानुकरणे वा यदा दीर्घाः स्युस्तदाऽष्टादशभेदं ब्रुवते क्लृपक इति।
६ सन्ध्यक्षराणां ह्रस्वा न सन्ति
७ तान्यपि द्वादशप्रभेदानि ।

८ अन्तस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च
९ रेफोष्मणां सवर्णा न सन्ति।
१० वर्ग्यो वर्ग्येण सवर्णः ॥

—:*:—

### ७—प्रक्रम-प्रकरणम्

१ उक्ताः स्थानकरणप्रयत्नाः।
२ इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम्।
३ निर्वृत्यते तत् करणम्।
४ प्रयतनं प्रयत्नः ॥

—:*:—

### ८—नाभितल-प्रकरणम्

१ तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाभिवायुरूर्ध्वमाक्रामन्नुर आदीनां स्थानानामन्यतमस्मिन्स्थाने प्रयत्नेन विधार्यते। विधार्यमाणः सोऽपि तत्स्थानानि विहन्ति। तस्मात् स्थानाभिघाताद् ध्वनिरुत्पद्यत आकाशे सा वर्णश्रुतिः। स वर्णस्यात्मलाभः।
२ तत्र वर्णानामुत्पद्यमाने यदा स्थानकरणप्रयत्नपर्यन्तं परस्परं स्पृशति सा स्पृष्टता।
३ यदेषत्स्पृशति सेषत्स्पृष्टता।
४ यदा दूरेण स्पृशति सा विवृतता।
५ यदा सामीप्येन स्पृशति सा संवृतता।
६ एषोऽन्तः प्रयत्नः।
७ अथ बाह्यः प्रयत्नः।
८ स एवेदानीं प्राणो नाभिवायुरूर्ध्वमाक्रम्य मूर्ध्नि प्रतिहते निवृत्तो तदा कोष्ठे संहन्यमाने गलबिलस्य संवृतत्वात् संवारो नाम वर्णधर्मो जायते विवृतत्वाद् विवारः।
९ तौ संवारविवारौ।
१० तत्र यदा कण्ठबिलं संवृतं तदा नादो जायते।
११ विवृते तु कण्ठबिले श्वासोऽनुजायते।
१२ तौ श्वासनादावनुप्रदानावित्याचक्षते।
१३ अन्ये श्वासनादानुप्रदानं व्यञ्जने नादवत्।
१४ तत्र यदा नाभिस्थलजध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते॥
१५ यदा श्वासोऽनुप्रदीयते तदा श्वास [ ध्वनि ] संसर्गादघोषो जायते।

१६ सा घोषवदघोषता ।

१७ महति वायौ महाप्राणः ।

१८ अल्पे वायावल्पप्राणः ।

१९ साल्पप्राणमहाप्राणता ।

२० [यत्र] महाप्राणत्वमूष्माणस्ते।

२१ तत्र यदानुसारिप्रयत्नस्तीव्रो भवति तदा गात्राणां निग्रहः कण्ठबिलस्य चाल्पत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते।

२२ यदा मन्दः प्रयत्नो भवति तदा गात्राणां प्रसन्नत्वं कण्ठबिलस्य च बहुत्वं स्वरस्य च वायोर्मन्दगतित्वात्स्निग्धता भवति तमनुदात्तमाचक्षते ।

२३ उदात्तानुदात्तसन्निकर्षात् स्वरित इति ।

२४ स एवं प्रयत्नो ह्यभिनिर्वृत्तः कृत्स्नः प्रयत्नो भवति ।

२५ स एवमापाशिलेः पञ्चदशभेदाख्या वर्णधर्मा भवन्ति ।

२६ तद्यथा स्पृष्टतेषत्स्पृष्टता विवृतता संवृतता च । संवारविवारौ श्वासनादौ घोषवदघोषता । अल्पप्राणमहाप्राणता उदात्तानुदात्तस्वरिता इति ।

२७ इदानीं शिक्षाग्रन्थः श्लोकैरुपसंह्रियते—

२८ अष्टौ स्थानानि वर्णाना
मुरःकण्ठः शिरस्तथा ।
जिह्वा मूलं च दन्ताश्च
नासिकौष्ठौ च तालु च ॥

२९ स्पृष्टत्वमीषत्स्पृष्टत्वं
संवृतत्वं तथैव च ।
विवृतत्वं च वर्णाना-
मन्तःकरणमुच्यते ॥

३० कालो विवारसंवारौ
श्वासनादावघोषता ।
घोषोऽल्पप्राणता चैव
महाप्राणः स्वरास्त्रयः ॥

३१ बाह्यं करणमाहुस्तान्
वर्णानां वर्णवेदिनः ॥

॥ इति शिक्षा-सूत्रपाठः ॥

—:*:—

## पाणिनीय-शब्दानुशासने

# ❀ परिशिष्टभागः ❀

## १

### कात्यायन–कृतो

# वार्त्तिक-गणपाठः

१. कृतापकृतादिगणः [ कृतापकृतादीनां चोपसङ्ख्यानम् ] [1]—

कृतापकृत । भुक्तविभुक्त । पीतविपीत ॥ १ ॥

२. गतप्रत्यागतादिगणः [ गतप्रत्यागतादीनां चोपसङ्ख्यानम् ] [1]—

गतप्रत्यागत । यातानुयात । पुटापुटिका । क्रयाक्रयिका । फलाफलिका । मानोन्मानिका ॥ २ ॥

३. शाकपार्थिवादिगणः [ समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च ] [2]—शाकपार्थिव । कुतुपसौश्रुत । अजातौल्वलि । यष्टिमौद्गल्य ॥ आकृतिगणोऽयम् ॥ ३ ॥

४. नावादिगणः [ "यदेतदप्राणिष्विति, एतदनावादिष्विति वक्ष्यामि" ( भाष्यम् ) ] [3]—नौ । काक । अन्न । शुक । शृगाल ॥ ४ ॥

५. प्रकृत्यादिगणः [ तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानम् ] [4]—

प्रकृति । प्राय । गोत्र । सम । विषम । द्विद्रोण । त्रिद्रोण । पञ्चक । साहस्र ॥ ५ ॥

६. मूलविभुजादिगणः [ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् ] [5]—

मूलविभुज । नखमुच । काकगुह । सरसीरुह । कुमुद । महीध्र । कुध्र । गिरिध्र ॥ ६ ॥

७. पार्श्वादिगणः [ पार्श्वादिषूपसङ्ख्यानम् ] [6]—पार्श्व । उदर । पृष्ठ ॥७॥

८. उत्तानादिगणः [ उत्तानादिषु कर्तृषु ] [6]—उत्तान । अवमूर्धन् ॥८॥

९. सम्पदादिगणः [ सम्पदादिभ्यः क्विप् ] [7]—

सम्पद् । विपद् । प्रतिपद् । आपद् । परिषद् ॥ ९ ॥

---

१. क्तेन नञ्विशिष्टेनानञ् । अ. २.१.५९.

२. वर्णो वर्णेन । अ. २. १. ६८.

३. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । अ. २. ३. १७.

४. कर्तृकरणयोस्तृतीया । अ. २.३.१८.

५. तुन्दशोकयोः परिमृजापनुदोः । अ. ३. २. ५.

६. अधिकरणे शेतेः । अ. ३. २. १५.

७. रोगाख्यायां ण्वुल् बहुलम् । अ. ३. ३. १०८.

१०. खलादिगणः [ खलादिभ्य इनिः ][8]—

खल । डाक । कुटुम्ब । शाक । कुण्डल ॥ आकृतिगणोऽयम् ॥ १० ॥

११. परिमुखादिगणः [ ञ्यप्रकरणे परिमुखादिभ्य उपसङ्ख्यानम् ][9]—

परिमुख । परिहनु । पर्योष्ठ । पर्युलूखल । परिसीर । उपसीर । उपस्थूण । उपकलाप । अनुपथ । अनुपद । अनुगङ्ग । अनुतिल । अनुशीत । अनुसाय । अनुसीर । अनुमाष । अनुयव । अनुयूप । अनुवंश । प्रतिशाख ॥ ११ ॥

१२. अध्यात्मादिगणः [ अध्यात्मादिषु चेष्यते ][10]—अध्यात्म । अधिभूत । अधिदेव । इहलोक । परलोक ॥ आकृतिगणोऽयम् ॥ १२ ॥

१३. माशब्दादिगणः [ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् ][11]—माशब्द । नित्यशब्द । कार्यशब्द ॥ १३ ॥

१४. प्रभूतादिगणः [ आहौ प्रभूतादिभ्यः ][11]—प्रभूत । पर्याप्त ॥ १४ ॥

१५. सुस्नातादिगणः [पृच्छतौ सुस्नातादिभ्यः][11]—

सुस्नात । सुखरात्रि । सुखशयन ॥ १५ ॥

१६. परदारादिगणः [गच्छतौ परदारादिभ्यः][11]—परदार । गुरुतल्प । १६

१७. महानाम्न्यादिगणः [ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसङ्ख्यानम् ][12] महानाम्नी । आदित्यव्रत । गोदान ॥ १७ ॥

१८. अवान्तरदीक्षादिगणः [ अवान्तरदीक्षादिभ्यो डिनिँः ][12]—

अवान्तरदीक्षा । तिलव्रत । देवव्रत ॥ १८ ॥

१९. उपवस्त्रादिगणः [ तदस्य प्रकरण उपवस्त्रादिभ्य उपसङ्ख्यानम् ][13]—

उपवस्तृ । प्राशितृ । चूडा । श्रद्धा ॥ १९ ॥

२०. स्वर्गादिगणः [ स्वर्गादिभ्यो यत् ][14]—

स्वर्ग । धन । यशस् । आयुस् । काम ॥ २० ॥

२१. पुण्याहवाचनादिगणः [ पुण्याहवाचनादिभ्यो लुक् ][14]—

पुण्याहवाचन । शान्तिवाचन । स्वस्तिवाचन ॥ २१ ॥

---

८. इनित्रकट्यचश्च । अ. ४. २. ५१.

९. अव्ययीभावाच्च । अ. ४. ३. ५९.

१०. अन्तःपूर्वपदाट्ठञ् । अ. ४. ३. ६०.

११. प्राग्वहतेष्ठक् । अ. ४. ४. १.

१२. तदस्य ब्रह्मचर्यम् । ५. १. ९४.

१३. ऋत्तोरण् । अ. ५. १. १०५.

१४. अनुप्रवचनादिभ्यश्छः । अ. ५. १. १११.

२२. चतुर्वर्णादिगणः [ ब्राह्मणादिषु चतुर्वर्णादीनामुपसङ्ख्यानम् ]—[15]
चतुर्वर्ण । चतुर्वेद । चतुराश्रम । सर्वविद्य । त्रिलोक । त्रिस्वर । षड्गुण । सेना । अनन्तर । सन्निधि । समीप । उपमा । सुख । तदर्थ । इतिह । मणिक ॥ २२ ॥

२३. ज्योत्स्नादिगणः [ अण्प्रकरणे ज्योत्स्नादिभ्य उपसङ्ख्यानम् ]—[16]
ज्योत्स्ना । तमिस्रा । कुण्डल । कुतुप । विसर्प । विपादिका ॥ २३ ॥

२४. भवदादिगणः [ 'भवदादिभिर्योग इति वक्तव्यम्' ( भाष्यम् ) ][17]—
भवान् । दीर्घायुः । देवानाम्प्रियः । आयुष्मान् ॥ २४ ॥

२५. आद्यादिगणः [ तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानम् ][18]—
आदि । मध्य । अन्त । पृष्ठ । पार्श्व ॥ २५ ॥

२६. शकन्ध्वादिगणः [ शकन्ध्वादिषु च ][19]—शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशवेषे । हलीषा । मनीषा । लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः ॥ २६ ॥

२७. त्रिचक्रादिगणः [ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि ][20]—
त्रिचक्र । त्रिवृत् । त्रिबन्धुर ॥ आकृतिगणोऽयम् ॥ २७ ॥

२८. पील्वादिगणः [ 'अपील्वादीनामिति वक्तव्यम्' ( भाष्यम् ) ][21]—
पीलु । दारु । रुचि । चारु । गम् । कम् ॥ २९ ॥

२९. पावकादिगणः [ पावकादीनां छन्दस्युपसङ्ख्यानम् ][22]—
पावकाः । ऋक्षकाः । अलोमकाः ॥ २९ ॥

३०. क्षिपकादिगणः [ क्षिपकादीनां च ][22]—क्षिपका । ध्रुवका । चरका । सेवका । करका । चटका । अवका । हलका । अलका । कन्यका । ध्रुवका । एडका ॥ ३० ॥

---

१५. गुणवचनब्राह्मणादिभ्यः कर्मणि च । अ. ५. १. १२४.
१६. अण् च । अ. ५. २. १०५.
१७. इतराभ्योऽपि दृश्यन्ते । अ. ५. ३. १४.
१८. प्रतियोगे पञ्चम्यास्तसिः । अ. ५. ४. ४४.
१९. एङि पररूपम् । अ. ६. १. ९४.
२०. परादिश्छन्दसि बहुलम् । अ. ६. २. १९९.
२१. इको वहे ऽपीलोः । अ. ६. ३. १२१
२२. न यासयोः । अ. ७.३. ४५

३१. काण्यादिगणः [ 'काण्यादीनां चेति वक्तव्यम्' (भाष्यम्)[२३]—
काणि। राणि। श्राणि। भाणि। हेठि। लोपि। ह्वायि। वाणि। लोटि॥ ३१॥

३२. अहरादिगणः [ अहरादीनां पत्यादिषूपसङ्ख्यानम् ][२४]—
अहर्। गीर्। धुर्॥ ३२॥

३३. पत्यादिगणः [ अहरादीनां पत्यादिषूपसङ्ख्यानम् ][२४]—
पति। गण। पुत्र॥ ३३॥

३४. इरिकादिगणः [ 'इरिकादिभ्यः प्रतिषेधो वक्तव्यः' (भाष्यम्) ][२५]—
इरिका। मिरिका। तिमिर॥ ३४॥

३५. गिरिनद्यादिगणः [ वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानम् ][२६]—
गिरिनदी। गिरिनख। गिरिनद्ध। गिरिनितम्ब। चक्रनदी। चक्रनितम्ब। तूर्यमान। माषोन। आर्गयन॥ ३५॥

इति वार्त्तिक-गणपाठः॥

—:※:—

२३. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। अ. ७. ४. ३.

२४. अम्नरूधरवरित्युभयथा छन्दसि। अ. ८. २. ७०.

२५ विभाषौषधिवनस्पतिभ्यः। अ. ८. ४. ६.

२६. वा भावकरणयोः। अ. ८. ४. १०.

# २

## परिभाषा-पाठः

१ व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
२ नहि कार्यी निमित्तत्वेनाश्रीयते ।
३ इतरेतराश्रयाण्यपि कार्याणि शास्त्रे प्रकल्पन्ते ।
४ आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
५ निर्दिश्यमानस्यादेशा भवन्ति ।
६ नानुबन्धकृतमनेकाल्त्वम् ।
७ वर्णाश्रये प्रत्ययलक्षणं नास्ति ।
८ क्वचिदेकदेशो ऽप्यनुवर्त्तते ।
९ अर्थवद्ग्रहणे नानर्थकस्य ।
१० न वर्णग्रहणेषु ।
११ भाव्यमानोऽण् सवर्णान्न गृह्णाति
१२ यस्मिन्विधिस्तदादावल्ग्रहणे ।
१३ विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्तविधिर्भवति ।
१४ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।
१५ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।
१६ सर्वो द्वन्द्वो विभाषयैकवद्भवति ।
१७ उदित्सवर्णं गृह्णाति न सवर्णमात्रम् ।
१८ प्रकृतिवदनुकरणं भवति ।
१९ विकरणेभ्यो नियमो बलीयान् ।
२० सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव ।
२१ पुनः प्रसङ्गविज्ञानात्सिद्धम् ।
२२ अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत्
२३ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।
२४ सर्वे विधयश्छन्दसि विकल्प्यन्ते ।
२५ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ।
२६ न स्त्रीप्रत्यये चानुपसर्जने ।
२७ सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ।
२८ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम ।
२९ विभक्तौ लिङ्गविशिष्टग्रहणम् ।
३० सूत्रे लिङ्गवचनमतन्त्रम् ।
३१ नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थः ।
३२ गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः ।
३३ क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ।
३४ अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते ।
३५ असति सम्भवे बाधनं भवति ।
३६ अस्ति च सम्भवो यदुभयं स्यात् ।
३७ क्त्वल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ।
३८ साम्प्रतिकाभावे भूतपूर्वगतिः ।
३९ नानुबन्धकृतमसारूप्यम् ।
४० लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ।
४१ एकदेशविकृतमनन्यवत् ।
४२ क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति ।

४३ बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
४४ ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ।
४५ पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
४६ नानुबन्धकृतमनेजन्तत्वम् ।
४७ चानुकृष्टं नोत्तरत्र ।
४८ मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
४९ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।
५० अकृतव्यूहाः पाणिनीयाः ।
५१ कृतमपि शास्त्रं निवर्तयन्ति ।
५२ निरनुबन्धकग्रहणे न सानुबन्धकस्य ।
५३ एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।
५४ तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
५५ स्वरविधौ व्यञ्जनमविद्यमानवत्
५६ क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च ।
५७ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
५८ व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
५९ समासप्रत्ययविधौ तदन्तविधिनिषेध उगिद्वर्णग्रहणवर्जम् ।
६० स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ऽपि ।
६१ सम्प्रसारणं सम्प्रसारणाश्रयं च कार्यं बलीयो भवति ।
६२ उभयत आश्रये नान्तादिवत् ।
६३ वर्णाश्रये विधौ नास्ति प्रत्ययलक्षणम्

६४ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।
६५ समासान्तो विधिरनित्यः ।
६६ सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
६७ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति।
६८ वार्णादाङ्गं बलीयः ।
६९ यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवत् ।
७० प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।
७१ असिद्धं बहिरङ्गमन्तरङ्गे ।
७२ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।
७३ सञ्ज्ञापूर्वको विधिरनित्यः ।
७४ सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।
७५ ताच्छीलिके णेऽप्यण्कृतं कार्यं भवति ।
७६ धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति ।
७७ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
७८ अबाधकान्यपि निपातनानि भवन्ति ।
७९ अङ्गाधिकारे तस्य तदुत्तरपदस्य च
८० प्रत्येकं वाक्यपरिसमाप्तिः ।
८१ क्वचित् समुदाये वाक्यपरिसमाप्तिः
८२ अभेदका इह शास्त्रे गुणाः ।
८३ औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
८४ सर्वविधिभ्य इड्विधिर्बलवान् ।
८५ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।

८६ वस्त्यस्तप्रवृत्त्येह कार्याणि क्रियन्ते ।
८७ अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।
८८ सत्यपि सम्भवे बाधनं भवति ।
८९ पर्जन्यवल्लक्षणप्रवृत्तिः ।
९० गर्भवट्टाबादयो भवन्ति ।
९१ विधौ परिभाषोपतिष्ठते नानुवादे ।
९२ प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं भवति ।
९३ अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य ।
९४ पूर्वत्रासिद्धीये न स्थानिवत् ।
९५ उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते । परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते ।
९६ णौ कृतं स्थानिवत् ।
९७ अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते ।
९८ पूर्वत्रासिद्धीयमद्विर्वचने ।
९९ अनित्यमागमशासनम् ।
१०० निमित्तापाये नैमित्तिकस्याप्यपायः ।
१०१ गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।
१०२ कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ।
१०३ प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।
१०४ उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।
१०५ अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।
१०६ ग्रामादाग्रहणेष्वविशेषः ।
१०७ सामान्यस्यातिदेशे विशेषस्यानतिदेशः ।
१०८ श्रुतानुमितयोः श्रौतः सम्बन्धो बलीयान् ।
१०९ पित्स्वराच्चित्स्वरो बलीयान् ।
११० विधिनियमसम्भवे विधिरेव ज्यायान् ।
१११ प्रतिपदविधानाद्योगविभागो गरीयान् ।
११२ सर्वविधिभ्यो लोपविधिर्बलवान् ।
११३ अनन्त्यविकारेऽन्त्यसदेशस्य ।
११४ नानर्थकेऽलोन्त्यविधिः ।
११५ प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ।
११६ सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।
११७ यथोद्देशं सञ्ज्ञापरिभाषम् ।
११८ कार्यकालं सञ्ज्ञापरिभाषम् ।
११९ गणकार्यमनित्यम् ।
१२० सन्देहे बहुवचनं प्रयोक्तव्यम् ।
१२१ अर्थाद्विभक्तिविपरिणामः ।
१२२ योगविभागादिष्टसिद्धिः ।
१२३ अगत्या हि खलु परिभाषाश्राश्रीयन्ते ।
१२४ व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।
१२५ अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ।
१२६ ज्ञापकसिद्धं न सर्वत्र ।
१२७ युगपदधिकरणवचनो द्वन्द्वः ।
१२८ पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ।
१२९ अन्ये तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेत्याहुः ।
१३० समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः ।

इति परिभाषापाठः

अथ शान्तनव-प्रणीतः

# फिट्सूत्रपाठः

### प्रथमः पादः

१ फिषः[1]।
२ पाटलापालङ्काम्बासागरार्थानाम्।
३ गेहार्थानामस्त्रियाम्।
४ गुदस्य च।
५ ध्यपूर्वस्य स्त्रीविषयस्य।
६ खान्तस्याश्मादेः।
७ हिष्ठवत्सरतिशत्थान्तानाम्।
८ दक्षिणस्य साधौ।
९ स्वाङ्गाख्यायामादिर्वा।
१० छन्दसि च।
११ कृष्णस्यामृगाख्या चेत्।
१२ वा नामधेयस्य।
१३ शुक्लगौरयोरादिः।
१४ अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः
१५ पृष्ठस्य च।
१६ अर्जुनस्य तृणाख्या चेत्।
१७ अर्यस्य स्वाम्याख्या चेत्।
१८ आशाया अदिगाख्या चेत्।
१९ नक्षत्राणामाब्विषयाणाम्।
२० न कुपूर्वस्य कृत्तिकाख्या चेत्।
२१ घृतादीनां च।
२२ ज्येष्ठकनिष्ठयोर्वयसि।
२३ बिल्वतिष्ययोः स्वरितो वा।

### द्वितीयः पादः

१ अथादिः प्राक् शकटेः।
२ ह्रस्वान्तस्य स्त्रीविषयस्य।
३ नब्विषयस्यानिसन्तस्य।
४ तृणधान्यानां च द्व्यषाम्।
५ त्रः सङ्ख्यायाः।
६ स्वाङ्गशिटामदन्तानाम्।
७ प्राणिनां कुपूर्वम्।
८ खय्युवर्णं कृत्रिमाख्या चेत्।
९ उनर्वन्नन्तानाम्।
१० वर्णानां तणतिनितान्तानाम्।
११ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये।
१२ अक्षस्यादेवनस्य।
१३ अर्धस्यासमद्योतने।
१४ पीतद्र्वर्थानाम्।
१५ ग्रामादीनां च।
१६ लुबन्तस्योपमेयनामधेयस्य।
१७ न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्।
१८ राजविशेषस्य यमन्वा चेत्।
१९ लघावन्ते द्वयोश्च बह्वषो गुरुः।
२० स्त्रीविषयवर्णाक्षुपूर्वाणाम्।
२१ शकुनीनां च लघुपूर्वम्।
२२ नर्तुप्राण्याख्यायाम्।
२३ धान्यानां च वृद्धक्षान्तानाम्।
२४ जनपदशब्दानामषान्तानाम्।
२५ हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा।
२६ इगन्तानां च द्व्यषाम्॥

---

[1] व्याकरणव्याख्याग्रन्थानामवलोकनाज् ज्ञायते यत्'फिषः' इत्येतावदेव सूत्रम्। 'अन्त उदात्तः' इत्युपरिष्टादनुवर्तते।

## तृतीयः पादः

१ अथ द्वितीयं प्रागीषात्।
२ त्र्यचां प्राङ्मकरात्।
३ स्वाङ्गामकुर्वादीनाम्।
४ मादीनां च।
५ शादीनां शाकानाम्।
६ पान्तानां गुर्वादीनाम्।
७ युतान्यण्यन्तानाम्।
८ मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा।
९ छन्दसि च।
१० कर्दमादीनां च।
११ सुगन्धितेजनस्य ते वा।
१२ नपःफलान्ताम्।
१३ यान्तस्यान्त्यात्पूर्वम्।
१४ थान्तस्य च नालघुनी।
१५ शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च।
१६ साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्।
१७ ईषान्तस्य हलादेरादिर्वा।
१८ उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम्।
१९ महिष्यषाढयोर्जायेष्टकाख्या चेत्।

## चतुर्थः पादः

१ शकटिशकट्योरक्षरमक्षरं पर्यायेण
२ गोष्ठजस्य ब्राह्मणनामधेयस्य।
३ पारावतस्योपोत्तमवर्जम्।
४ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम्।
५ कपिकेशहरिकेशयोश्छन्दसि।
६ न्यङ्स्वरौ स्वरितौ।
७ न्यर्बुदव्यल्कशयोरादिः।
८ तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः।
९ बिल्वभक्ष्यवीर्याणि छन्दसि।
१० त्वत्त्वसमसिमेत्यनुच्चानि।
११ सिमस्याथर्वणेऽन्त उदात्तः।
१२ निपाता आद्युदात्ताः।
१३ उपसर्गाश्चाभिवर्जम्।
१४ एवादीनामन्तः।
१५ वाचादीनामुभावुदात्तौ।
१६ चादयोऽनुदात्ताः।
१७ यथेति पादान्ते।
१८ परस्यान्त उदात्तः।
१९ शेषं सर्वमनुदात्तम्॥

इति फिट्सूत्रपाठः

# धातुवर्णानुक्रमणिका



धातुभिः सह कोष्ठकेषु गणनामाद्यक्षराणि तदनन्तरं सूत्राङ्काश्च निर्दिश्यन्ते ।

ईडुँ (अ ९)
ईडँ (चु १३६)
ईरुँ (अ ८)
ईरँ (चु २३३)
ईर्क्ष्यँ (भ्वा ३४१)
ईर्ष्यँ (भ्वा ३४१)
ईशँ (अ १०)
ईषुँ (भ्वा ४०६)
ईषँ (भ्वा ४६१)
ईहुँ (भ्वा ४२१)
उक्षँ (भ्वा ४३९)
उखँ (भ्वा ८८)
उखिँ (भ्वा ८८)
उङ् (भ्वा ६८३)
उचँ (दि ११४)
उछिँ (भ्वा १३०)
,, (तु १३)
उछीँ (भ्वा १३१)
,, (तु १४)
उज्झँ (तु २१)
उठँ (भ्वा २२८)
उठुँ (भ्वा ५००)
उध्रसँ (क्रया ५४ टि)
,, (चु २१० टि)
उन्दीँ (रु १९)
उभँ (तु ३२)
उम्भँ (तु ३२)
उब्जँ (तु २०)
उरस् (क ३८)
उर्दँ (भ्वा १८)
उर्वीँ (भ्वा ३८२)
उलडिँ (चु ९ पा)
उषँ (भ्वा ४६४)
उषस् (क १०)
उहिँर् (भ्वा ४९१)
ऊठँ (भ्वा २२९)
ऊन (चु ३१२)
ऊयीँ (भ्वा ३२२)
ऊर्जँ (चु १७)
ऊर्णुञ् (अ ३२)
ऊषँ (भ्वा ४६०)
ऊहुँ (भ्वा ४३१)
ऋ (भ्वा ६७१)
ऋ (जु १६)
ऋचँ (तु १९)
ऋछँ (तु १५)
ऋजुँ (भ्वा १०७)
ऋजिँ (भ्वा १०८)
ऋणुँ (त ५)
ऋति [ सौत्रः[1] ]
ऋधुँ (दि १३१)
,, (स्वा २४)
ऋफँ (तु ३०)
ऋम्फँ (तु ३०)
ऋषीँ (तु ७)
ॠ (क्रया २८)
एजुँ (भ्वा १०९)
एजृँ (भ्वा १४३)
एठुँ (भ्वा १६६)
एधुँ (भ्वा २)
एला (क २७)
एवृँ (भ्वा ३३७ टि)
एषृँ (भ्वा ४१२)
ओखृँ (भ्वा ८६)
ओणृँ (भ्वा ३०५)
ओलडिँ (चु ९)
ककँ (भ्वा ७१)
ककिँ (भ्वा ७४)
कखँ (भ्वा ८५)
कखेँ (भ्वा ५३३)
कगेँ (भ्वा ५३७)
कचँ (भ्वा १०१)
कचिँ (भ्वा १०२)
कटीँ (भ्वा २१२)
कटेँ (भ्वा १९०)
कठँ (भ्वा २२५)
कठिँ (भ्वा १६३)
कठिँ (चु २७३)
कडँ (भ्वा २४९)
,, (तु ८८)
कडिँ (भ्वा १८१)
कडिँ (भ्वा २५०)
,, (चु ४८)
कडुँ (भ्वा २४०)
कणँ (भ्वा ३०३)
,, (भ्वा ५३९)
,, (चु १८३)
कण्डूञ् (क १)
कत्थँ (भ्वा ३०)
कत्र (चु ३३४)
कथुँ (भ्वा ५२४ टि)
कथ (चु २७८)
कदुँ (भ्वा ५२४)
कदिँ (भ्वा ५८)
कदिँ (भ्वा ५२३)
कनीँ (भ्वा ३११)
कपिँ (भ्वा २६१)
कबृँ (भ्वा २६४)

१ अष्टा. ३.१.२९

कॄञ् (क्रया १४)
कृतँ (चु १२०)
क्लृपँ (चु २१७ टि)
केपृँ (भ्वा २५७)
केला (क २७)
केलृँ (भ्वा ३६३)
केवृँ (" ३३८)
कै (" ६५४)
क्नसुँ (दि ७)
क्नूञ् (क्रया ८)
क्नूयीँ (भ्वा ३२६)
क्मरँ (" ३७४)
क्रथँ (" ५४२)
" (चु २५१)
क्रदुँ (भ्वा ५२४)
क्रदिँ (" ५८)
क्रदिँ (" ५२३)
[आङ्] क्रन्दँ (चु १९५)
क्रपँ (भ्वा ५२२)
क्रमुँ (" ३१९)
[डु] क्रीञ् (क्रया १)
क्रीडृँ (भ्वा २४१)
क्रुङ् (" ६८४)
क्रुञ्चँ (" ११३)
क्रुडँ (तु १०२)
क्रुधँ (दि ७८)
क्रुशँ (भ्वा ५९५)
क्लथँ (" ५४२)
क्लदुँ (" ५२४)
क्लदिँ (" ५८)
क्लदिँ (" ५२३)
क्लपँ (चु १२६)

क्लमुँ (दि ९७)
क्लिदिँ (भ्वा १४)
क्लिदिँ (" ५९)
क्लिदूँ (दि १२८)
क्लिशँ (दि ५०)
क्लिशूँ (क्रया ५२)
क्लीबृँ (भ्वा २६५)
क्लुङ् (" ६८६)
क्लेशँ (" ४०२)
क्वणँ (" ३०३)
क्वथेँ (" ५८५)
क्षजिँ (" ५२०)
क्षजिँ (चु ८६)
क्षणुँ (त ३)
क्षरँ (भ्वा ५९०)
[ क्षप (चु ३६५) ]
क्षपिँ (चु ८५)
क्षमूँष् (भ्वा ३०१)
क्षमूँष् (दि ९६)
क्षलँ (चु ६३)
क्षि (भ्वा १४५)
क्षि (स्वा ३०)
क्षि (तु ११५)
क्षिणुँ (त ४)
क्षिपँ (दि १५)
क्षिपँ (तु ५)
क्षीजँ (भ्वा १४६)
क्षीबृँ (" २६६)
क्षीवुँ (" ३८१)
क्षीष् (क्रया ३८)
[ टु ] क्षु (अ २९)
क्षुदिँर् (रु ६)
क्षुधँ (दि ७९)

क्षुभँ (भ्वा ५०२)
क्षुभँ (दि १२६)
" (क्रया ५०)
क्षुरँ (तु ५५)
क्षेवुँ (भ्वा ३८१)
क्षै (भ्वा ६५३)
क्षोट (चु २९९)
क्ष्णु (अ ३०)
क्ष्मायीँ (भ्वा ३२७)
क्ष्मीलँ (भ्वा ३४७)
[ञि] क्ष्विदाँ (भ्वा ४९७)
[ञि] क्ष्विदाँ (दि १३०)
क्ष्वेलृँ (भ्वा ३६३)
खचँ (क्रया ६०)
खजँ (भ्वा १४१)
खजिँ (भ्वा १४२)
खटँ („ २०२)
खट्टँ (चु ९९)
खडँ (चु ४८)
खडिँ (भ्वा १८२)
खडिँ (चु ४८)
खदँ (भ्वा ४०)
खनुँ („ ६१८)
खर्जँ („ १३८)
खर्दँ („ ४९)
खर्बँ („ २८८)
खर्वँ („ ३८८)
खलँ („ ३६६)
खवँ (क्रया ६१)
खषँ (भ्वा ४६२)
खादृँ („ ३९)
खिटँ („ १९७)

ग्रथिँ (भ्वा २९)
ग्रन्थँ (क्र्या ४४)
" (चु २५०)
" (चु २६३)
ग्रसँ (चु २१९)
ग्रसुँ (भ्वा ४२०)
ग्रहँ (क्र्या ६३)
ग्राम (चु ३१५)
ग्रुङ् (भ्वा ६८४)
ग्रुचुँ (" ११७)
ग्लसुँ (" ४२०)
ग्लहुँ (" ४३४)
ग्लहुँ (" ४३४ टि)
ग्लुचुँ (" ११७)
ग्लुञ्चुँ (" ११८)
ग्लेपृँ (" २५५)
" (" २५७)
ग्लेवृँ (" ३३७)
ग्लेषृँ (" ४१०)
ग्लै (" ६४५)
घघँ (" ९२)
घटँ (" ५१४)
घटँ (चु १९०)
" (" २२२)
घटिँ (" २२२)
घट्टँ (भ्वा १५९)
घट्टँ (चु ९७)
घस्लृँ (भ्वा ४७४)
घिणिँ (" २९६)
घुङ् (" ६८३)
घुटँ (" ४९९)
घुटँ (तु ९४)
घुणँ (भ्वा २९७)

घुणँ (तु ५०)
घुणिँ (भ्वा २९६)
घुरँ (तु ५६)
घुषिँ (भ्वा ४३५)
घुषिँर् (" ४३६)
" (चु १९४)
घूरीँ (दि ४५)
घूर्णँ (भ्वा २९७)
घूर्णँ (तु ५०)
घृ (भ्वा ६७२)
" (जु १४)
घृ (चु ११७)
घृणिँ (भ्वा २९६)
घृणुँ (त ७)
घृषुँ (भ्वा ४७०)
घ्रा (भ्वा ६६१)
ग्रुङ् (भ्वा ६८४)
ङुङ् (भ्वा ६८३)
चकँ (" ७३)
चकँ (" ५३२)
चकासृँ (अ ६७)
चक्कँ (चु ६२)
चक्षिँङ् (अ ७)
चञ्चुँ (भ्वा ११६)
चटँ (चु १८९)
चटेँ (भ्वा १९१)
चडिँ (भ्वा १७७)
चडिँ (चु ५५)
चणँ (भ्वा ५४०)
चतेँ (" ६०७)
चदिँ (" ५६)
चदेँ (" ६०७)

चनँ (भ्वा ५४३)
" (चु २६६)
चपँ (भ्वा २८३)
" (चु ९४)
चपिँ (चु ८४)
चमुँ (भ्वा ३१७)
" (स्वा २९)
चयँ (भ्वा ३२०)
चरँ (" ३७५)
" (चु २१३)
चर्चँ (भ्वा ४७५)
" (तु १७)
" (चु १८०)
चर्वँ (भ्वा २८८)
" (" २८९)
चर्वँ (" ३८६)
चलँ (" ५७४)
" (तु ६६)
" (चु ७४)
चषँ (भ्वा ६२९)
चहँ (" ४८४)
" (चु ९१)
चह (" २९०)
चायृँ (भ्वा ६२०)
चिञ् (स्वा ५)
चिञ् (चु ९५)
चिटँ (भ्वा २०८)
चितँ (चु १४३)
चितिँ (चु २)
चितीँ (भ्वा ३२)
चित्र (चु २४३)
चिरिँ (स्वा ३०)

[1] अष्टा. ३.२.१५०

जॄ (चु २३७)
जॄष् (दि २०)
जेषृँ (भ्वा ४१२)
जेहृँ ( " ४२८)
जै ( " ६५३)
ज्ञपँ (चु ८९)
ज्ञा (भ्वा ५५१)
ज्ञा (क्र्या ३९)
ज्ञा (चु १९९)
ज्या (क्र्या ३०)
ज्युङ् (भ्वा ६८५)
ज्रि ( " ६७९)
ज्रि (चु २३८)
ज्वरँ (भ्वा ५२६)
ज्वलँ ( " ५४५)
" ( " ५७३)
झटँ ( " १९९)
झमुँ ( " ३१७)
झर्झँ ( " ४७५)
" (तु १७)
झषँ (भ्वा ४६२)
झषँ ( " ६३१)
झॄ (क्र्या २५)
झॄष् (दि २०)
टकिँ (चु १०४)
टलँ (भ्वा ५७६)
टिकृँ ( " ७४)
टीकृँ ( " ७४)
ट्वलँ ( " ५७६)
डपँ (चु १४६)
डिपँ (दि १२१)
" (तु ८०)

डिपँ (चु १४१)
डिपँ (चु १४६)
डीङ् (भ्वा ६९६)
" (दि २५)
ढौकृँ (भ्वा ७४)
णक्षँ ( " ४४२)
णखँ ( " ८८)
णखिँ ( " ८८)
णटँ ( " २०३)
" ( " ५३०)
णदँ ( " ४४)
" (चु २२२)
णभँ (भ्वा ५०३)
णभँ (दि १२७)
" क्र्या ५१)
णमँ (भ्वा ७०९)
णयँ ( " ३२०)
" ( " ३२१)
णलँ ( " ५७९)
णशँ (दि ८३)
णसँ (भ्वा ४१७)
णहँ (दि ५५)
णासृँ (भ्वा ४१६)
णिक्षँ ( " ४४१)
णिजिँ (अ १८)
णिजिँर् (जु ११)
णिदिँ (भ्वा ५४)
णिदृँ ( " ६१२)
णिलँ (तु ७०)
णिविँ (भ्वा ३९१)
णिशँ ( " ४७८)
णिसिँ (अ १७)

णीञ् (भ्वा ६४३)
णीलँ ( " ३४९)
णीवँ ( " ३८०)
णु (अ २८)
णुदँ (तु २)
णुदँ (तु १३४)
णू (तु १०४)
णेदृँ (भ्वा ६१२)
णेषृँ ( " ४१२)
तकँ ( " ८२)
तकिँ ( " ८३)
तक्षँ ( " ४४६)
तक्षूँ ( " ४३८)
तगिँ ( " ८८)
तञ्चुँ ( " ११६)
तञ्चूँ (रु २१)
तटँ (भ्वा २०१)
तडँ (चु ४७)
" (चु २२४)
तडिँ (भ्वा १७९)
तत्रिँ (चु १४७)
तनुँ (त १)
तनुँ (चु २६५)
तन्तस् (क १५)
तपँ (भ्वा ७१२)
तपँ (दि ४८)
तपँ (चु २४१)
तमुँ (दि १२)
तयँ (भ्वा ३२०)
तरण (क ३९)
तर्कँ (चु २२२)
तर्जँ (भ्वा १३६)

त्रैङ् ( भ्वा ६९३ )
त्रौकृँ ( ,, ७४ )
त्वक्षूँ ( ,, ४३८ )
त्वगिँ ( ,, ८८ )
,, ( ,, ९० )
त्वचँ ( तु १८ )
त्वञ्चुँ ( ,, ११६ )
[ ञि ] त्वराँ ( भ्वा५२५ )
त्वसँ ( चु १९६ )
त्विषँ ( भ्वा ७२८ )
त्सरँ ( भ्वा ३७३ )
थिपृँ ( भ्वा २५३ )
थुडँ ( तु ९६ )
थुर्वीँ ( भ्वा ३८२ )
थेपृँ ( भ्वा २५३ )
दंशँ ( ,, भ्वा ७१६ )
दक्षँ ( भ्वा ४०३ )
,, ( भ्वा ५२१ )
दघँ ( स्वा २८ )
दण्ड ( चु ३५३ )
ददँ ( भ्वा १६ )
दधँ ( भ्वा ७ )
दमुँ ( दि ९३ )
दम्भुँ ( स्वा २३ )
दयँ ( भ्वा ३२२ )
दरिद्रा ( अ ६६ )
दलँ ( भ्वा ३६९ )
,, ( चु २२१ )
दशिँ ( चु १४४ )
दशिँ ( चु २२२ )
दसँ ( चु १४५ )
दसिँ ( चु १४५ )
दसिँ ( चु २२३ )
दसुँ ( दि १०३ )
दहँ ( भ्वा ७१८ )
[ डु ] दाञ् ( जु ९ )
दाण् ( भ्वा ६६५ )
दानँ ( भ्वा ७२१ )
दाप् ( अ ५२ )
दाशृँ ( भ्वा ६२२ )
दाशृँ ( स्वा ३० )
दासृँ ( भ्वा ६३५ )
दिपृँ ( ,, २५३ टि )
दिविँ ( भ्वा ३९२ )
दिवुँ ( दि १ )
दिवुँ ( चु १७४ )
दिवुँ ( चु १९२ )
दिशँ ( तु ३ )
दिहँ ( अ ५ )
दीक्षँ ( भ्वा ४०४ )
दीङ् ( दि २४ )
दीधीङ् ( अ ६९ )
दीपीँ ( दि ४१ )
दु ( भ्वा ६७८ )
[ टु ] दु ( स्वा १० )
दुःख ( चु ३५६ )
,, ( क १६ )
दुर्वीँ ( भ्वा ३८२ )
दुलँ ( चु ६० )
दुवस् ( क ३५ )
दुषँ ( दि ७४ )
दुहँ ( अ ४ )
दुहिँर् ( भ्वा ४९१ )
दूङ् ( दि २३ )
दृ ( स्वा ३० )
,, ( क्र्या २३ )
दृङ् ( तु ११९ )
दृपँ ( तु ८५ )
दृपँ ( तु २९ )
,, ( चु २४४ )
दृफँ ( तु २८ )
दृभँ ( चु २४६ )
दृभीँ ( तु ३४ )
,, ( चु २४५ )
दृम्पँ ( तु २९ )
दृम्फँ ( तु २८ )
दृशिँर् ( भ्वा ७१५ )
दृहँ ( भ्वा ४८८ )
दृहिँ ( भ्वा ४८८ )
दॄ ( भ्वा ५४८ )
देङ् ( " ६९० )
देपृँ ( " २५३ टि )
देवृँ ( " ३३६ )
दैप् ( " ६५९ )
दो ( दि ३९ )
द्यु ( अ ३३ )
द्युतँ ( भ्वा ४९२ )
द्यै ( " ६४६ )
द्रमँ ( " ३१५ )
द्रा ( अ ४७ )
द्राक्षिँ ( भ्वा ४५० )
द्राखृँ ( " ८६ )
द्राघृँ ( " ७८ )
,, ( " ७९ )
द्राडृँ ( " १८५ )
द्राहृँ ( " ४२९ )

पथँ ( चु २३ )
पथिँ ( चु ४३ )
पथेँ ( भ्वा ५८५ )
पद् ( दि ५८ )
पद ( चु ३१९ )
पन् ( भ्वा २९९ )
पम्पस् ( क १५ )
पयँ ( भ्वा ३२० )
पयस् ( क ४० )
[ पर्ण ( चु ३६५ ) ]
पर्दँ ( भ्वा २४ )
पर्पँ ( भ्वा २८८ )
पर्बँ ( भ्वा २८८ )
पर्वँ ( भ्वा ३८५ )
पलँ ( भ्वा ५८० )
पल्पूल ( चु ३०५ )
पशँ ( चु १८७ )
पष ( चु २८६ )
पसिँ ( चु ८१ )
पा ( भ्वा ६६० )
,, ( अ ४९ )
पार ( चु ३३१ )
पालँ ( चु ७५ )
पि ( तु ११३ )
पिच्छँ ( चु ४४ )
पिजँ ( चु ३४ )
पिजिँ ( चु ३४ )
पिजिँ ( अ २० )
पिजिँ ( चु २२२ )
पिटँ ( भ्वा २०४ )
पिठँ ( भ्वा २३० )
पिडिँ ( भ्वा १७३ )
पिडिँ ( चु १३८ )
पिविँ ( भ्वा ३९१ )
पिशँ ( तु १४५ )
पिष्लृँ ( रु १५ )
पिसँ ( चु ३५ )
पिसिँ ( चु २२२ )
पिसृँ ( भ्वा ४७६ )
पीङ् ( दि ३२ )
पीडँ ( चु १२ )
पीलँ ( भ्वा ३४८ )
पीवँ ( भ्वा ३८० )
पुंसँ ( चु १०३ )
पुटँ ( भ्वा २१५ )
,, ( तु ७६ )
,, ( चु २२२ )
पुट ( चु ३३२ )
पुटिँ ( चु २२३ )
पुट्टँ ( चु २९ )
पुडँ ( तु ९३ )
पुडिँ ( भ्वा २१८ )
पुणँ ( तु ४५ )
पुथँ ( दि १३ )
,, ( चु २२२ )
पुथिँ ( भ्वा ३६ )
पुरँ ( तु ५७ )
पुर्वँ ( भ्वा ३८५ )
,, ( चु १३४ )
पुलँ ( भ्वा ५८२ )
,, ( चु ६७ )
पुषँ ( भ्वा ४६६ )
पुषँ ( दि ७१ )
पुषँ ( क्र्या ५८ )
पुषँ ( चु २२० )
पुष्पँ ( दि १६ )
पुस्तँ ( चु ५९ )
पूङ् ( भ्वा ६९४ )
पूजँ ( चु ११० )
पूञ् ( क्र्या १० )
पूयीँ ( भ्वा ३२५ )
पूरीँ ( दि ४२ )
पूरीँ ( चु २२५ )
पूर्णँ ( चु १०२ )
पूलँ ( भ्वा ३५५ )
,, ( चु १०१ )
पूषँ ( भ्वा ४५३ )
पृ ( स्वा ११२ )
पृङ् ( तु १११ )
पृचँ ( चु २३० )
पृचीँ ( अ २२ )
पृचीँ ( रु २४ )
पृजिँ ( अ २१ )
पृडँ ( तु ४० )
पृणँ ( तु ४१ )
पृथँ ( चु २२ )
पृषुँ ( भ्वा ४६८ )
पॄ ( जु ४ )
,, ( क्र्या १८ )
,, ( चु १६ )
पेलृँ ( भ्वा ३६४ )
पेवृँ ( भ्वा ३३७ )
पेसृँ ( भ्वा ४७६ )
पै ( भ्वा ६५६ )
पैणृँ ( भ्वा ३०९ )
[ ओँ ] प्यायीँ ( भ्वा ३२८ )

भिदिँ (भ्वा ५२)
भिदिँर् (रु २)
भिषज् (क १९)
भिष्णज् (क २०)
[ ञि ] भी (जु २)
भुजँ (रु १७)
भुजोँ (तु १२६)
भुरण (क २५)
भुवोँ (चु २१६)
भू (भ्वा १)
,, (चु २७०)
भूषँ (भ्वा ४५९)
,, (चु १९७)
भृजीँ (भ्वा १०८)
[ डु ] भृञ् (जु ५)
भृञ् (भ्वा ६३९)
भृशिँ (चु २२३)
भृशुँ (दि ११५)
भॄ (क्र्या २०)
भेषृँ (भ्वा ६२३)
भ्यसँ (भ्वा ४१८)
भ्रंशुँ (भ्वा ५०६)
भ्रंशुँ (दि ११५)
भ्रंसुँ (भ्वा ५०४)
भ्रक्षँ (भ्वा ६३२)
भ्रणँ (भ्वा ३०३)
भ्रमुँ (भ्वा ५८९)
,, (दि ९५)
भ्रशुँ (भ्वा ५०६)
भ्रस्जँ (तु ४)
भ्राजृँ (भ्वा १०९)
[ टु ] भ्राजृँ (भ्वा५७०)
[ टु ] भ्राशृँ (भ्वा ५७०)
भ्री (क्र्या ३७)
भ्रुडँ (तु १०२)
भ्रूणँ (चु १५८)
भ्रेजृँ (भ्वा १०९)
भ्रेषृँ (भ्वा ६२४)
भ्लक्षँ (भ्वा ६३२)
[ टु ] भ्लाशृँ (भ्वा५७०)
भ्लेषृँ (भ्वा ६२४)
मकिँ (भ्वा ७०)
मक्षँ (भ्वा ४४५ टि)
मखँ (भ्वा ८८)
मखिँ (भ्वा ८८)
मगध (क १४)
मगिँ (भ्वा ८८)
मघिँ (भ्वा ७६)
,, (भ्वा ७७)
मघिँ (भ्वा ९३)
मचँ (भ्वा १०३)
मचिँ (भ्वा १०४)
मठँ (भ्वा २२४)
मठिँ (भ्वा १६३)
मडिँ (भ्वा १७२)
मडिँ (भ्वा २१३)
,, (चु ५६)
मणँ (भ्वा ३०३)
मत्रिँ (चु १४८)
मथिँ (भ्वा ३६)
मथेँ (भ्वा ५८७)
मदँ (चु १७३)
मदिँ (भ्वा १२)
मदीँ (भ्वा ५५५)
मदीँ (दि ९८)
मनँ (दि ६५)
मनँ (चु १७७)
मनस् (क ४ टि)
मनुँ (त ९)
मन्तु (क २)
मन्थँ (क्र्या ४३)
,, (भ्वा ३५)
मभ्रँ (भ्वा ३७५)
मयँ (भ्वा ३२०)
मर्चँ (चु ११६)
मर्वँ (भ्वा २८८)
मर्बँ (भ्वा ३८५)
मलँ (भ्वा ३३२)
मल्लँ (भ्वा ३३२)
मवँ (भ्वा ३९५)
मव्यँ (भ्वा ३४०)
मशँ (भ्वा ४७९)
मषँ (भ्वा ४६२)
मसीँ (दि १११)
मस्कँ (भ्वा ७४)
[ टु ] मस्जोँ (तु १२४)
महँ (भ्वा ४८५)
मह (चु २९१)
महिँ (भ्वा ४२२)
महिँ (चु २२३)
महीङ् (क ३३)
मा (अ ५५)
माक्षिँ (भ्वा ४४९)
माङ् (जु ६)
,, (दि ३३)
मानँ (भ्वा ७००)

लुभँ ( तु २२ )
लूञ् ( क्र्या १२ )
लूषँ ( भ्वा ४५५ )
„ ( चु ७६ )
लेट् ( क ६ )
लेपृँ ( भ्वा २५८ )
लेला ( क ७ )
लोकृँ ( भ्वा ६२ )
लोकृँ ( चु २२२ )
लोचृँ ( भ्वा ९८ )
लोचृँ ( चु २२२ )
लोट् ( क ६ )
लोडृँ ( भ्वा २४६ )
लोष्टृँ ( " १५८ )
वकिँ ( " ६९ )
„ ( " ७४ )
वक्षँ ( " ४४३ )
वखँ ( " ८८ )
वखिँ ( भ्वा ८८ )
वगिँ ( " ८८ )
वघिँ ( " ७६ )
वचँ ( अ ५६ )
वचँ ( चु २६८ )
वजँ ( भ्वा १५४ )
वञ्चुँ ( " ११६ )
वञ्चुँ ( चु १७१ )
वटँ ( भ्वा १९६ )
„ ( " ५२९ )
वट ( चु २८२ )
„ ( चु ३४५ )
वटिँ ( चु ५३ )
„ ( भ्वा ३४७ )

वठँ ( भ्वा २२३ )
वठिँ ( „ १६२ )
वडिँ ( „ १७० )
वडिँ ( चु ५४ )
वणँ ( भ्वा ३०३ )
वदँ ( भ्वा ७३६ )
वदँ ( चु २६७ )
वदिँ ( भ्वा १० )
वनँ ( भ्वा ३१२ )
„ ( भ्वा ३१३ )
वनुँ ( भ्वा ५४४ )
वनुँ ( क ८ )
[ डु ] वपँ ( ७३० )
वभ्रँ ( भ्वा ३७५ )
[ टु ] वमँ ( भ्वा ५८८ )
वयँ ( भ्वा ३२० )
वर ( चु २७९ )
वर्चँ ( भ्वा ९६ )
वर्णँ ( चु १९ )
„ ( चु २० )
वर्ण ( चु ३६४ )
वर्धँ ( चु १२१ )
वर्षँ ( भ्वा ४०८ )
वर्हँ ( भ्वा ४२६ )
वर्हँ ( चु २२२ )
वलँ ( भ्वा ३३१ )
वल्कँ ( चु ३७ )
वल्गुँ ( भ्वा ८८ )
वल्गु ( क ३ )
वल्भँ ( भ्वा २७४ )
वल्लँ ( भ्वा ३३१ )
वल्हँ ( भ्वा ४२६ )

वल्हँ ( चु २२२ )
वशँ ( अ ७२ )
वषँ ( भ्वा ४६२ )
वष्क ( चु ३४२ )
वसँ ( भ्वा ७३२ )
वसँ ( अ १३ )
वसँ ( चु २१२ )
[ वस ( चु ३६५ ) ]
वसुँ ( दि १०४ )
वस्कँ ( भ्वा ७४ )
वहँ ( „ ७३१ )
वा ( अ ४३ )
वाक्षिँ ( भ्वा ४४९ )
वाछिँ ( „ १२३ )
वाडृँ ( भ्वा १८४ )
वात ( चु ३०६ )
वाशृँ ( दि ५२ )
वावृतुँ ( दि ४९ )
वास ( चु ३०८ )
विचिँर् ( रु ५ )
विछँ ( तु १३१ )
„ ( चु २२२ )
विजिँर् ( जु १२ )
[ ओँ ] विजीँ ( तु ९ )
[ ओँ ] विजीँ ( रु २२ )
विटँ ( भ्वा २०९ )
विथृँ ( भ्वा २७ )
विदँ ( अ ४७ )
विदँ ( दि ६० )
„ ( रु १३ )
विदँ ( चु १७६ )
विदूलृँ ( तु १४० )

शानँ (भ्वा ७२२)
[आङ्] शासुँ (अ १२)
शासुँ (अ ६८)
शिक्षँ (भ्वा ४००)
शिखिँ (भ्वा ८९)
शिघिँ (भ्वा ९५)
शिजिँ (अ १९)
शिञ् (स्वा ३)
शिटँ (भ्वा १९८)
शिलँ (तु ७२)
शिषँ (भ्वा ४६२)
,, (चु २४०)
शिष्लृँ (रु १४)
शीकँ (चु २२३)
,, (चु २५२)
शीकृँ (भ्वा ६१)
शीङ् (अ २५)
शीभृँ (भ्वा २६७)
शीलँ (भ्वा ३५०)
शील (चु ३०२)
शुचँ (भ्वा १११)
[इँर्] शुचिँर् (दि ५४)
शुच्यँ (भ्वा ३४३)
शुट्टँ (चु ३०)
शुठँ (भ्वा २३२)
,, (चु ११२)
शुठिँ (भ्वा २३३)
,, (भ्वा २३६)
,, (चु ११३)
शुधँ (दि ८०)
शुनँ (तु ४८)
शुन्धँ (भ्वा ६०)
शुन्धँ (चु २५८)
शुभँ (भ्वा २९५)
शुभँ (भ्वा ५०१)
शुभँ (तु ३३)
शुम्भँ (भ्वा २९५)
,, (तु ३३)
शुल्कँ (चु ८३)
शुल्वँ (चु ७७)
शुषँ (दि ७२)
शूर (चु ३२३)
शूरीँ (दि ४६)
शूर्पँ (चु ७८)
शूलँ (भ्वा ३५३)
शूषँ (भ्वा ४५६)
शृधँ (भ्वा ५१०)
शृधुँ (भ्वा ६१३)
शृधुँ (चु २०१)
शॄ (क्र्या १७)
शेलृँ (भ्वा ३६४)
शेवृँ (भ्वा ३३८)
शै (भ्वा ६५५)
शो (दि ३६)
शौटृँ (भ्वा १८७)
शोणृँ (भ्वा ३०६)
श्च्युतिँर् (भ्वा ३४)
श्मीलँ (भ्वा ३४७)
श्यैङ् (भ्वा ६९१)
श्रकिँ (भ्वा ६६)
श्रगिँ (भ्वा ८८)
श्रणँ (भ्वा ५४०)
,, (चु ४६)
श्रथँ (भ्वा ५४२)
श्रथँ (चु १४)
,, (चु २४८)
श्रथ (चु २९२)
श्रथिँ (भ्वा २८)
श्रन्थँ (क्र्या ४२)
,, (क्र्या ४४)
,, (चु २६३)
श्रमुँ (दि ९४)
श्रम्भुँ (भ्वा २७७)
श्रा (भ्वा ५५०)
श्रा (अ ४६)
श्रिञ् (भ्वा ६३८)
श्रिषुँ (भ्वा ४६७)
श्रीञ् (क्र्या २)
श्रु (भ्वा ६७६)
श्रै (भ्वा ६५५)
श्रोणृँ (भ्वा २०७)
श्लकिँ (भ्वा ६६)
श्लगिँ (भ्वा ८८)
श्लथँ (भ्वा ५४२)
श्लाखृँ (भ्वा ८७)
श्लाघृँ (भ्वा ८०)
श्लिषँ (दि ७५)
श्लिषँ (चु ४२)
श्लिषुँ (भ्वा ४६७)
श्लोकृँ (भ्वा ६३)
श्लोणृँ (भ्वा २०८)
श्वकिँ (भ्वा ७४)
श्वचँ (भ्वा १००)
श्वचिँ (भ्वा १००)
श्वठँ (चु ३२)
श्वठ (चु २८१)

ष्वस्कँ ( भ्वा ७४ )
[ ञि ] ष्विदाँ ( भ्वा ४९६ )
[ ञि ] ष्विदाँ ( भ्वा ७०६ )
[ ञि ] ष्विदाँ ( दि ७७ )
सङ्केत ( चु ३१५ )
सङ्ग्राम ( चु ३४९ )
सत्र ( चु ३२६ )
सपर ( क १७ )
सभाज ( चु ३११ )
समीँ ( दि ११२ )
सम्बर ( क ४२ )
सम्भूयस् ( क ४१ )
साति [ सौत्रः[1] ]
साधँ ( स्वा १७ )
साम ( चु ३०३ )
साम्बँ ( चु २६ )
सार ( चु २९२ )
सुख ( चु ३५६ )
,, ( क १६ )
सूच ( चु २९५ )
सूत्र ( चु ३२८ )
सूक्षँ ( भ्वा ४४८ )
सूक्ष्यँ ( भ्वा ३४१ )
सृ ( भ्वा ३६० )
,, ( जु १६ )
सृजँ ( दि ६७ )
सृजँ ( तु १२३ )
सृल्टँ ( भ्वा ७१० )
सेकृँ ( भ्वा ६६ )
स्कन्दिँर् ( भ्वा ७०७ )
स्कन्भु [ सौत्रः[2] ]
स्कभिँ ( भ्वा २७१ )
स्कुञ् ( क्र्या ६ )

१. अष्टा० ३.१.१३८
२. अष्टा० ३.१.८२

स्कुदिँ ( भ्वा ८ )
स्कुन्भु [ सौत्रः[1] ]
स्खदँ ( भ्वा ५१९ )
स्खदिँर् ( भ्वा ५६६ )
स्खलँ ( भ्वा ३६५ )
स्तन ( चु २८४ )
स्तन्भु [ सौत्रः[1] ]
स्तुन्भु [ सौत्रः[1] ]
स्तृञ् ( स्वा ६ )
स्तृहूँ ( तु ६० )
स्तॄञ् ( क्र्या १३ )
स्तेन ( चु ३१७ )
स्तोम ( चु ३५० )
स्त्यै ( भ्वा ६५१ )
स्थुडँ ( तु ९६ )
स्थूल ( चु ३२४ )
स्पदिँ ( भ्वा १३ )
स्पर्धँ ( भ्वा ३ )
स्पशँ ( भ्वा ६२७ )
स्पशँ ( चु १४९ )
स्पृ ( स्वा १३ )
स्पृशँ ( तु १३० )
स्पृह ( २९३ )
स्पॄ ( क्र्या २१ टि )
स्फरँ ( तु ९९ )
स्फायीँ ( भ्वा ३२८ )
स्फिटँ ( चु ३९ )
स्फिट्टँ ( चु १०० )
स्फुटँ ( भ्वा १६० )
स्फुटँ ( तु ८२ )
,, ( चु १८९ )

१. अष्टा. ३. १. ८२.

स्फुटिँ ( चु ४ पा )
स्फुटिँर् ( भ्वा २२१ )
स्फुडँ ( तु १०१ )
स्फुडिँ ( चु ४ )
स्फुरँ ( तु ९८ )
स्फुर्छाँ ( भ्वा १२८ )
स्फुलँ ( तु १०० )
[ टुओँ ] स्फूर्जाँ ( भ्वा १४४ )
स्मिटँ ( चु ४० )
स्मीलँ ( भ्वा ३४७ )
स्मृ ( भ्वा ५४७ )
स्मृ ( भ्वा ६६८ )
स्मृ ( स्वा १४ )
स्यन्दूँ ( भ्वा ५११ )
स्यमँ ( चु १६१ )
स्यमुँ ( भ्वा ५७१ )
स्रंसुँ ( भ्वा ५०४ )
स्रकिँ ( भ्वा ६६ )
स्रम्भुँ ( भ्वा २७६ )
,, ( भ्वा ५०७ )
स्रिवुँ ( दि ३ )
स्रु ( भ्वा ६७४ )
स्रेकृँ ( भ्वा ६६ )
स्वनँ ( भ्वा ५५८ )
,, ( भ्वा ५७१ )
स्वर ( चु २८७ )
स्वर्दँ ( भ्वा १७ )
स्वादँ ( भ्वा २३ )
स्वादँ ( चु २२८ )
स्वृ ( भ्वा ६६७ )
स्वॄ ( क्र्या २१ टि )
हटँ ( भ्वा २०५ )
हठँ ( भ्वा २२७ )

इति धातु-वर्णानुक्रमणिका

—:※:—

